विभाषेत्यत्रापि संबन्धात् विभाषापदार्थः संज्ञेति तु न युक्तं अर्थे संज्ञात्वस्यादृष्टत्वात् । अर्थाश्रितशब्दमात्रं संज्ञेत्यपि न युक्तं एकस्यार्थस्य समानफलकानेकसंज्ञाकरणस्यानाकृतिः संज्ञेति वृद्धिसंज्ञासूत्रस्थभाष्येण तिरस्कारात् । तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटिते ऽपि तथैवास्तु, किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः । स्वं रूपं ॥ स्वरूपमित्यस्य बोध्यमिति शेषो व्याख्यानात्तदाह । संज्ञीति । राज्ञा यदित्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासंभवात्प्रातिपदिकादित्यनेनान्वयासंभवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र स्वशब्द आत्मीयत्वनार्थमाह । रूपशब्देन शब्दस्वरूपमेतदुभयं संज्ञीत्यर्थः । तत्रार्थो न विशेष्य उक्तयुक्तेः । किं तु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः संज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिवाच्यः शास्त्रीयो ऽपि । स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायो ऽभिव्यक्तपदार्था ये इति न्यायश्च सिद्धः । अत एवेयं विशिष्टरूपोपादाने एव इदं सूत्रञ्च तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च न तु वर्णग्रहणे इत्याकरे स्पष्टम् । दाधाघ्वत्यस्यहल्यघोरित्यादौ चारितार्थ्येनोपसर्गे घोरित्यादौ स्वं रूपमित्यनेन परत्वाद्बाधशङ्कावारणार्थमशब्दसंज्ञेति । नात्र षष्ठीतत्पुरुषः । कर्मसंज्ञादेरर्थसंज्ञात्वेन निषेधाप्रवृत्तेः कर्मण्यणित्यादौ स्वरूपग्रहणापत्तेः । किं तु सप्तमीतत्पुरुषः । शब्दपदेन च शब्दशास्त्रं तदाह । शब्दशास्त्र इति । भाष्ये तु अर्थे कार्यस्य बाधे व्युपस्थितत्वाद्राज्ञ इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम् । उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतया ऽन्वयसंभवेन चार्थवत्परिभाषापि सिद्धा । लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषष्शब्दस्य षट्संज्ञाकरणेन शब्दशास्त्रीयसंज्ञायां स्वरूपाग्रहणज्ञापनाच्चोपसर्गे घोरित्यादावदोषेणाशब्दसंज्ञेत्यपि व्यर्थमित्युक्तम् । अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषो ऽत एव वृक्षादिषु विशेषाणां ग्रहणं स्वे पुष इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं सभा राजेत्यत्र पर्यायाणामेव ग्रहणं पक्षिमत्स्यमृगान्हन्तीत्यादौ मृगपक्षिणः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति । अन्यथा तदर्थं यत्नः कर्तव्यः परेश्च घाङ्कयोरित्यत्र घशब्देन स्वरूपग्रहणं नदीपौर्णमास्यन्यत्र नदीपदेन स्वरूपग्रहणं सिद्ध्यति । लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः । ज्ञापकपक्षे ऽपि

ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न दोषः । अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक् । येन वि ॥ येनेति करणे तृतीया विधिरिति भावे किः । कर्मात्र विधेयं कर्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव । यत्तु करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्धमिति तन्न । सुब्विभक्तौ न लक्षणेत्यस्य सर्वसम्मतत्वात् । किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं कृतं शास्त्रेण तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणया ऽपि साधुत्वाभावस्य प्रत्ययः पुंयोगादित्यादिभाष्यतो लाभात् । करणस्य व्यापारवत्त्वनियमादन्येषाञ्च व्यापाराभावाद्विशेषणमेवात्र करणतृतीयान्तेनोच्यते तस्य चेतरव्यावृत्तिकरणमेव व्यापारः । तदुक्तं भाष्ये । येनेति करणैषा तृतीया ऽन्येन चान्यस्य विधिर्भवति यथा चैत्रस्य मण्डपाम हस्त्यश्वादिभिर्विधत्त एवमचो यदिति अचा धातोर्यतं विधत्त इति अन्येन चान्यस्येत्यनेन यस्य कार्यं यस्मिन्परतस्तत्र तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणं तत्र शब्दार्थस्येतरविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्व चित्सति गमके तादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः । तच्चान्तरङ्गत्वात्समानाधिकरणमेव । तत्र तदन्तविधौ सति तथा विशेषणत्वयोग्यताप्यत तत्प्रवृत्तौ निमित्तम् । अत एवेन्द्वनित्यादौ इनशो तदन्तविधिर्न हीनङ्गमित्यस्यैव भवति तदन्तस्येत्यस्य तदन्तशब्दस्येत्यर्थः । नन्वेवमेरजित्यय इत्यत्र न स्यादत आह । स्वस्य चेति । स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यत इति भावः । स्व रूपमित्यस्य प्रत्याख्याने तु तदन्तस्य चेति पाठ्यमिति बोध्यम् । समासप्रेति । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च द्वितीयाश्रितेत्यादौ श्रितादयो ऽधिकारप्राप्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । तेन कृष्णं परमश्रित इत्यत्र न समासः । नडादिभ्यः फगित्यादावपि नडादिविशेष्य प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक् । उगिदिति । तेनातिभवतीत्यत्रागितश्चेति ङीप् दार्वीरित्यत्रात ह्रस्व सिद्धः । एवञ्चोक्तनिषेधः प्रत्ययांश गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्तीत्यनेनैकवाक्यत्वलाभात् । उगिद्वर्णेति त्वेकदेशानुवाद इति बोध्यम् । अत एव वनो रचेत्यादौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नायं निषेध इति दिक् । विरामः ॥ भावे घञ् । शब्दानुशासनप्रस्तावादाह । वर्णानामिति । उच्चारणाभाव इत्यर्थः । स च व्याख्यानात्क्वचिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते । प्रदेशा वावसानइत्यादयः । अभावस्यापि

बुद्धिकृतं पौर्वापर्यं वर्णेषु । परशब्दो नान्यार्थो ऽन्यत्वस्याव्यभिचरितत्वादत आह । अतिशयित इति । स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः । तेन तद्व्यवायेन वाक्योच्चारणे संज्ञा न । संनिकर्षश्च प्रायः परेण । क्वचित्पूर्वेणापि । अत एवावसानकार्याणां संहिताधिकारे पाठः । न चावसानसंज्ञया परत्वे सावकाशायाः संहितासंज्ञायाः सत्यपि सम्भवे बाधनं भवतीति न्यायेन विषयभेदे ऽपि बाधः स्यादिति तदसङ्गतिरेवेति वाच्यम् । तदधिकारे तेषां पाठेनाकडारसूत्रस्य स्वशास्त्रीयसंज्ञामात्रविषयत्वकल्पनात् । एते तु न तथा लोके ऽपि सत्त्वात् । तदुक्तं वार्त्तिककृता । संहितावसानयोर्लोकविदितत्वादिति । न चावसानकार्येषु संहिताधिकारसंबन्ध एवास्तु अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यम् । सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात् । ध्वनितञ्चेदं विसर्जनीयस्य स इति सूत्रे भाष्ये । संनिकर्षः सामीप्यम् । सुप्तिङ् ॥ सुबिति सुपः पकारेण प्रत्याहारो व्याख्यानात् । यद्यपि प्रत्ययग्रहणे तदन्तग्रहणमित्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम् । प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति न युक्तम् । इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात् । आक्षिप्तस्य शाब्दे ऽनन्वयाच्च तथापि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम् । तेन घसंज्ञा तरप्तमपोरेव न तदन्तस्य । तेन गौरीब्राह्मणितरेत्यत्र न ह्रस्वः । एतच्चैषद्धमामध्यादेव प्रदेशेष्वपि न तदन्तविधिः । न च ज्ञापिते ऽपि व्यर्थम्, पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरिति वाच्यम् । पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे प्रत्ययग्रहणस्यैवाभावात् । तस्मात्प्रत्ययविधिरित्याद्यनुवृत्तः पदसमुदायस्य न पदत्वम् । इयानित्यादौ यस्मात्प्रत्ययविधिस्तदादीत्यादितदन्तत्वं व्यपदेशिवद्भावेन बोध्यम् । तेनाशास्त्रीयस्य व्यकाचत्व इति निर्देशात् । विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहाये ऽपि कर्त्तव्यानीति तदर्थात् । अत एवेयन्मात्रमित्यादौ वस्वन्तात्स्वार्थे इति मात्रचिर्मादिः । हरिष इत्यादौ सोऽस्तु नैव पदत्वं हलि सर्वेषामिति निर्देशेन असहाये तदप्रवृत्तेः । निज्ञा चत्वार एकाच इति भाष्यं त्वभ्युपेत्य वादेन । ध्वनितञ्चेदमादैच उपदेशे तास्यनुदात्तेदित्यादौ भाष्ये । तत्र हि ढौकतइत्योकारस्य ह्रस इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वञ्च व्यपदेशिवद्भावेनाशङ्क्यापेक्षता व्यपदेशिवद्भाव इत्युक्तम् । यो वर्णो ऽर्थवांस्तेन व्यपदेशिवद्भावः । वर्णस्यार्थवत्त्वञ्चेयायेत्यादावसहाये एव न तु प्रकृते इति तदर्थः । एवञ्चैकस्मिन्नर्थवत्त्वस्यार्थवतेत्यनेनोक्त इति दिक् । हलो ऽनन्तराः । गणैः शतं दण्डान्तामित्यत्र

समुदाये शतवणवनवच्च समुदायस्यैव संज्ञा न प्रत्येकं, अनन्तरा इत्युक्तेश्च । तस्य विशेषणतायां एवौचित्यात् । यत्तु संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसंज्ञाव श्यात् प्रत्येकं सेति तन्न । घटपटौ संयुज्येते यत्रेत्यादौ संयुज्यमानपदार्था तिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तदतिरिक्तत्रुटितपदवाक्य-रूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । महासंज्ञा तु प्राचामनुरोधादेव । तेन सदृषद्वातीत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः । हल इति बहुव-चनं सार्थम् । यद्वा । हलौ च हलश्चेत्येकशेषः । स्वरितात्संहितायामिति सूत्रे ऽनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात् । तेन द्वयोरपीति शिक्षेत्यादौ गुरोश्च हल इत्यप्रत्ययः सिद्ध्यति । यत्रापि बहवः श्लिष्टास्त-त्रापि द्वयोर्द्वयोरेव न बहूनाम् । झलि परे संयोगादिलोपविधानात् बहूनामित्यपि चिन्त्यमेव फलाभावात् । तत्र तत्राङ्गपदधात्ववयवसंयोग-स्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम् । आनन्तर्यं व्यवधानाभावो व्यवधानञ्च विजातीयेनैवेत्याशयेनाह । अज्भिरिति । अत्र कुत्वं न्याय्यम् । अत एव हयवरट्सूत्रे ऽचो ऽज्विति भाष्यप्रयोगे कुत्वं दृश्यते स्वरैरव्यवहिता इति तूचिता वृत्तिः । हलः किम् । तितउ इव । अत्र गुरोरिति प्लुतः स्यात् । अनन्तराः किम् । दृपसम् । अत्र सकार-मकारयोः संयोगत्वे स्कोरिति लोपः स्यात् । संयोगे गुरु ॥ भेत्तेत्यादौ गुणस्तु कः कित्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद्बोध्यः । इति संज्ञेति । प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणमिति समाप्त-मित्यर्थः । तेनाम्रेडितपदस्यभसंज्ञालोपसंज्ञाद्यनुपन्यासे ऽपि न क्षतिः । अथ इत्याद्युपन्यासस्तु प्रासङ्गिकः ॥ इति संज्ञाप्रकरणम् ॥

इको गुण ॥ परिभाषेयं, व्याख्यानात् । गुणवृद्धिशब्दाभ्यामिति । गुण-वृद्धिग्रहणानर्थक्यस्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनवसमा-नत्वे संज्ञिपरमेव स्यात् । संज्ञाकार्याणामन्यत्र संज्ञिपरत्वात् । यद्वा तदप्य-नुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः । स्वादिष्विति सूत्रे ऽनुवृत्त-पदपदस्य संज्ञापरताया एव दृष्टत्वात् । ष्णान्तेति सूत्रे संख्यापदस्य तदन्तत्वासंभवादर्थपरतेति बोध्यम् । लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः । तत्र प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्येति साक्षात्तच्छब्दो-नुवादेन विहितस्येति वार्थात् । ध्वनितश्चेदमत्रैव भाष्ये । अस्याश्च विधे-यसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं तदाह । विधीयेते इति । अत एवातो गुणे वृद्धिरेस्येत्यादौ न दोषः । एतेन शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन त्यदादीनाम इत्यादिव्यावृत्तौ सिद्धा-

यामिह गुणवृद्धी इति व्यर्थमित्यपास्तम् । एतन्मूलक एव विधौ परिभाषेयमिष्यते नानुवादे इत्युद्घोषः । एवञ्च पदोपस्थापकपरिभाषाविषये विधीयत इत्यस्यैवाध्याहारो बोध्यः । एवञ्च तस्मिन्निति निर्दिष्टे षष्ठी स्थाने इत्यादेरनुवादे ऽपि प्रवृत्तिः । तेन प्रत्ययस्थात्कात्पूर्वस्यादात्तस्वरितयोर्यणः इत्यादौ न दोषः । उदीचामातः स्थाने इति स्थाने ग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः । अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता । तच्छेषस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः । इयञ्च दधितेत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं भिन्नामित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसंपत्त्यर्थञ्चेति दिक् । प्लुतशब्दैरिति । ऊकाल इति सूत्राद् ह्रस्वदीर्घप्लुत इत्यज्ज्ञिति चानुवर्त्तते ह्रस्वेत्यादिपदञ्च तृतीयया विपरिणतमिति भावः । तेन दिव उदिति आ विभक्तावित्यादावेतदनुपस्थितिः । शेषं प्राग्वत् । आद्यन्तौ ॥ यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति तथापि समूहयोरन्वयबोधोत्तरं यथासंख्यमिति सूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेतद्रीत्या प्रयोगो ऽसाधुरेवेति भाष्ये स्पष्टम् । अत एव यथासंख्यसूत्रोपन्यासो युक्तः । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सबन्धः । पुरस्तादपवादन्यायेन स्थाने योगत्वस्यायमपवादः । प्रत्ययपरत्वन्तु परत्वादिमं बाधते तेन चरिष्टादयः परा एव भवन्ति । अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते तदाह । यस्याकार्याविति । आद्यन्तावित्ता ऽवयवौ यच्छब्दार्थः । यथासंख्यासत्त्वमर्थमाह । क्रमादिति । इताविति किम् । टुक् पर्यायेणाद्यन्तयोर्मा भूत् । मिदचः ॥ अयं बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः तृणह इति निर्देशात् । निर्धारणे इति । यस्य समुदायस्य निर्द्धारिताः तस्याचां मध्ये इत्यर्थः । सौत्रमेकवचनमिति भावः । तस्यैवेति । यस्य विहितस्तस्यैवेत्यर्थः । अत एव समुदायभक्तो नोत्सहते ऽवयवस्यागन्तां विहन्तुमिति भाष्ये सङ्गच्छते । अन्त्यावयव इति । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः । मुञ्चतीत्यादिविषये तु फलाभावादयोग्यत्वाच्चान्त्यावयव इत्यंशाप्रवृत्तिः । परिभाषाणामनियमे नियमकारिणीत्याद्याह । अनिर्धारितेति । तेनादुपधाया गोह इत्यत्र स्थानेयोगत्वं न । उपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात् । स्थानेयोगेत्यस्य स्थानपदार्थनिरूपितसंबन्धार्थिकेत्यर्थः । स्थानेन योगो यस्या इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । अस्तेरनन्तरे इत्यादेरपि अनन्तरादिनिरूपितसबन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे स्थानपदाध्याहार इत्यन्यत्र

विस्तरः । प्रसङ्ग इति । दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथा दर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति सम्भवेऽर्थवत एव । अर्थप्रत्यायनार्थं शब्दप्रयोगात् । इको यणित्यादेरप्यकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य इत्यर्थः । एङोरित्यादेश्च तैस्तुरिति, अतो न शब्दनित्यताहानिः । किं चेकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यप्यर्थः । अत एवात्र परस्मिन्नित्यादि सङ्गच्छते । स्पष्टञ्चेदं दाधाघ्विति सूत्रस्थानिवन्मन्त्रयोर्भाष्ये । स्थानेऽन्त ॥ षष्ठीत्यनुवृत्त्या यत्र स्थानषष्ठी तत्रेदमुपतिष्ठत इति विधिवाक्यशेषत्वेनास्य नियामकत्वं न तु विहितानां नियमः । भेदकवत्त्वमिति न्यायविरोधात् । फलितमाह । प्रसङ्ग इति । सदृशतम इति । प्राप्यमाणानां मध्य एव । अत एव गङ्गोदकमित्यादौ त्रिमात्रो न । तमप् किम् । वाग्घरिरित्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो मा भूत् । किं तु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति । स्थानेऽन्तरतम इति सप्तम्यन्तपाठस्तु दीर्घत्व पर्यासिद्ध्या दृष्ट इति भाष्ये स्पष्टम् । यत्रानेकमिति । स्थानेग्रहणं षष्ठ्युद्देशानुवृत्त्याऽनुवर्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति संभवे स्थानत एवान्तरतम इत्यर्थमिति भावः । स्थानत इति । स्थानेनेत्यर्थः । तत्र स्थानत इको यणचीति अर्थतस्तु क्रोष्टुरिति । इह क्रोष्टुशब्दस्थाने पक्तृशब्दो नादेशः । गुणतस्तु वाग्घरिरित्यादौ । प्रमाणतोऽदमाऽसीत्यादौ । तस्मिन्नितीति । अत्र तस्मिन्निति उत्तरत्र तस्मादिति सप्तम्यन्तपदपञ्चम्यन्तपदार्थकः स्वतन्त्रस्य सप्तनाम्ना निर्देशो व्याख्यानात् । बहुलत्वसंस्कारानुरोधाच्च । न तु तत्तत्पदपरमन्यथा तस्मिन्नणि च तस्माद्वुड्ढि तस्माच्छसो न इत्यत्रैव प्रवर्तेयाताम् । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय तद्वोध्यार्थस्य निर्दिष्टइत्यनेन सामानाधिकरण्याय च । इतिशब्दः पुनस्तस्य तद्रूपपरत्वं बोधयति । निःशब्दो नैरन्तर्ये द्विशिरुच्चारणे । एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाक्यार्थः । एवञ्च तत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम्यन्तपदस्य चार्थो लिङ्गम् । अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टइति औपश्लेषिकेऽधिकरणे सप्तमी ध्वनिता, उपपदविभक्तेरिति न्यायात् न तु सतिसप्तमीति तत्र च दीयत इति सूत्रे कैयटे स्पष्टम् । तुक्रमोरिति सूत्रे च कैयट आह तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यमिति । उपश्लेषः समीपवर्तित्वं तच्च वर्णयोर्वाव्यवधानरूपम् । एवमिको यणचीत्यादावपीयमेवेति संहितायामिति सूत्रे भाष्ये । तत्रोपश्लेषः पूर्वस्यैव परस्याव्यवहितस्यैव

अव्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् क्वचित्सतोऽप्यध्याहारात्सप्तम्याश्रयणे ह्यस्याः प्रवृत्तिरिति श्नाल्लोप इत्यत्र भाष्ये उक्तम् । अत एव कर्तृकर्मणोः कृतीत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थयोः कर्तृकर्मणोः षष्ठीति तदर्थात् । तस्मादिति सूत्रे निर्दिष्ट इति निर्दिष्टादित्यर्थकं विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणेति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । उदः स्था इत्यादौ चोद इति दिग्योगलक्षणा पञ्चमी । तत्रानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति तस्मादित्यनेन नियम्यते । अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थस्तत्फलितमाह । सप्तमीनिर्देशेनेत्यादि । यदि तु अर्धमात्राधिकं कालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधिकारश्च विफल इति संहितायामिति सूत्रे भाष्ये स्पष्टम् । अवग्रहे च समुदाय एव शरणमिति आनङादिविषये चादेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक् । अकृतव्यूहपरिभाषात्वनित्या नास्त्येव वा । न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यमिति भाष्येण तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स्पष्टमुक्तत्वाच्च । एतेन संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककालव्यवाये प्रवृत्तिज्ञापनार्थस्तेनाग्नाविष्णू इत्यादाववग्रहे आनङादिसिद्धिरित्यपास्तम् । प्रत्ययः परश्चेत्यादौ तूत्तरांशविकला तस्मादिति परिभाषा प्रवर्तते । तेन न प्रत्यया अव्यवहिताः । अत एव छन्दसि परेऽपि व्यवहिताश्चेति सूत्रं सार्थकम् । आगमविधावप्यनेमुगित्यादौ तस्मिन्निति परिभाषया पूर्वमव्यवहितत्वानिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन षष्ठीस्थानेऽन्यस्याप्रवृत्तेः । गाङ्कुटादिभ्य इत्यादावपि पूर्वांशविकलैतत्परिभाषाप्रवृत्तिर्बोध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् । अलोऽन्त्यस्य ॥ षष्ठी स्थाने इत्यनुवर्तते तदाह । षष्ठीत्यादि । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थानेत्यादि किम् । इट् नृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति । साहचर्यादल इति षष्ठ्यन्तमन्त्यस्याल इत्यर्थः । अल इति किम् । पदस्येति विधीयमानं वसुस्रंस्विति दत्वं स्रवनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति प्रत्यासत्तिलभ्यम् । एवञ्चाल एवेति अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायोत्तरं स्थानषष्ठ्या लिङ्गम् । अत एवेतोऽदित्यादौ नास्याः प्रवृत्तिः । षष्ठ्यादीनामित्यस्यावयवषष्ठीत्वाविति इत्यस्याल्समुदायोत्तरत्वाभावाच्च । ङिच्च ॥ अनेकालर्थमिदम् ।

आदेरिति । आदेरन्त इत्यर्थः । तेन द्वीपमित्यादौ पान्तसमुदायस्य नेत्वम् । अत्र परस्येत्यावर्तते तेन परत्वबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम् । तेन नित्य इन इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् । अनेकाल् शित् ॥ शित उदाहरणम् इदम इश् । ननु शकारोच्चारणसामर्थ्यादुक्तपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिद्ग्रहणं व्यर्थम् । किं च । सानुबन्धकनिर्देशे यथा नालः स्थानित्वं आभस्य इति सूत्रे भाष्ये उक्तम्, तथादेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम् । विधौ निर्दिष्टो यो ऽनेकाल् स सर्वस्येति सूत्रार्थः । उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता न अनुबन्धविनिर्मुक्तस्येति नाणादित्सूत्रभाष्यविरोधः । छ्वोरिति लोपस्य लोपो व्योरिति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः । अनुबन्धानामनेकान्तत्वमेव न्याय्यमित्युक्तमिति चेन्न । नानुबन्धकृतमनेकाल्त्वमिति ज्ञापनेन चरितार्थत्वात् । तेन दिव औदित्यादीनां न सर्वादेशत्वम् । अस्य च यथास्थसंज्ञा तथा वक्ष्यते । नानेकाल् शिदिति तु नोक्तम् । अनन्तरस्येति न्यायेनादेः परस्येत्यस्यैव निषेधापत्तेः । परत्वादिति । आदेः परस्येत्यस्यावकाशः । द्व्यन्तरुपसर्गेभ्यो. द्वीपम् । शित्सर्वस्येदम इश् । एवमतो भिस इत्यादिविषये ऽनेकालित्यनेनादेः परस्येति परत्वाद्बाध्यते । एतेन इदन्त्वेत्यत्र इदैवानेकालन्त्यस्येति नियमेन सिद्धे ऽनेकाल्ग्रहणं व्यर्थमित्यपास्तम् । स्वरितेन ॥ इत्थंभूतलक्षणे तृतीया । स्वरितत्वज्ञाप्यो ऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमज्भक्तसाधारणं स्वरूपमधिक्रियमाणपदघटकाच्चिह्नं वा । तच्चानुनासिकवत्प्रतिज्ञागम्य विनियोगश्च प्रायेणोत्तरत्रोपस्थिति. क्व चित्पूर्वत्रापि । कियद् दूरमधिकार इत्यत्रापि तु गमकं व्याख्यानमेव शरणम् । किं च, स्वरितेनाधिकारगतिः । तेन गोस्त्रियोरित्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् । एतेन व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति आकाङ्क्षायान्तु सत्यामनुवृत्तकल्पनाया अन्याय्यत्वादकृतापितस्य न्याय्यत्वाच्च किं सूत्रेणेत्यपास्तम् । स्पष्टं चेदं भाष्ये । परनित्येति । परं विप्रतिषेधसूत्राद्बलवत् । नित्यं कृताकृतप्रसङ्गि तद्विपरीतमनित्यम् । तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव सत्त्वकल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । तदीयनिमित्तसमुदायानन्तर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह । असिद्धमिति । इदञ्च वाहऊठ्सूत्रेण ज्ञापितम् । यथापि प्रत्यङ्गवर्ती लोको दृश्यते । मनुष्यो ऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदा-

न्ततः संबन्धिनामिति न्यायमूलकत्वमस्या ग्रतः परस्मिन्निति भाष्ये उक्तं तथापि तेन न्यायेन युगपत्प्राप्तिविषयत्वेव स्यात्। ज्ञापकेन तु सर्वविषयता बोध्यतइति वाहऊठसूत्रे कैयटे स्पष्टम्। अन्यथा वाहः सम्प्रसारणे पूर्वरूपे च कृते गुणाश्रये गुणे वृद्धिरेचीति वृद्धौ प्रष्ठौह इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात्। नाजानन्तर्यपरिभाषा तु नाऽऽन्येवेति नायजुद्धन्द्रमित्यादौ बाध इति परिभाषेन्दुशेखरे विस्तरः। अपवादस्तु वृत्तप्रामाण्यदुर्लभात्। ग्रकृ-तेति। न कृता विशिष्ट ऊह स्तको निमित्तविनाशे ऽपि कार्यस्थितिरूपः। यथा दण्डविनाशे ऽपि घटस्थितिः, स येस्मिन्त्यर्थेस्तदाह। निमित्तमित्या-दि। तत्प्रयुक्तं कार्यं ज्ञातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ इति कैयटा-दयः। अन्ये तु अहो ऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात्। तन्निमित्तवि-नाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः। इयं परिभाषा निष्फला निर्मू-लेति परिभाषेन्दुशेखरे निरूपितम्॥ इति परिभाषाप्रकरणम्॥

स्यादिति। कार्यशब्दवादे इदम्। संहितायां विषयइति। कार्यिनि-मित्तयोः संहिताया विषयभूतायामित्यर्थः। स्थानेन इति। इदं यथासंख्य सूत्रे भाष्ये स्पष्टम्। ज्ञातिपत्ते यथासंख्येनापि निर्वाह इति स्थानेऽन्तर-तमसूत्रभाष्ये स्पष्टम्। अननुनासिकस्थाने ऽपि निरनुनासिक एव। विधी-यमानत्वेन सवर्णाग्राहकत्वात्। गुणाभेदकत्वपक्षे ऽपि न विधेयाविषये दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु ज्ञातिपक्ष एवेत्यणुदित्सूत्रभाष्ये स्पष्टम्। अत एव सर्वतकारादीनां ऋलन्त्यादिर्सिद्धत्वादय इत्यादिनिर्देशा-दयश्च जात्याश्रयणे मानमिति दिक्। व्याकरणस्य साध्वनुशासनत्वेन शब्द-नित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रैकपक्ष्यापत्त्या प्रवृत्तिप्रसङ्गे मार्जेः साधु-भवतीत्यादिर्बुद्धिसज्ज्ञासूत्रस्थभाष्यप्रामाण्येन यदिह परिनिष्ठितत्वेन ज्ञाप्य-न्तरसाधुत्वार्थोपादानकल्प्यवाक्येन बोध्यम्। कार्यशब्दवादे तु पूर्वभाष्योक्तो-तानादिनात्पर्यवशात्स्वकल्पनं बोध्यम्। एतेन स्थानप्रमाणाभ्यान्तरतम इत्कारे चरितार्था यण् दीर्घे कथं स्यादित्यपास्तम्। स्थानेन आन्तर्यस्य सत्ता बलवत्त्वात्स्थानेन्तरतम इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः। नो विद्युर्यो ध्वनितस्त्विदमेवाकुमच भाष्ये तदाह। द्वु वा स्त इति। सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्ते-रिति भावः। अवमाने द्वित्वसिद्धये ऽनचीति प्रसज्यप्रतिषेधस्तदाह। न त्वचीति। इदं द्वित्व वाष्ठादित्वबद्धिः प्रयोग एव। पर इत्यादेरङ्गाकृता-च्चारणक्रियानिरूपितकर्मत्वषष्ठीत्वस्योचितत्वात्। इति धर्म्येति। न तु द्वित्वे पूर्वधस्थाने जशत्वनिष्पत्तिस्यापि। लक्ष्यनत्वमस्येति न्यायात्। विकारान्यत्वेन

न तत्र भेद इत्यन्यत्र प्रपञ्चितम् । स्थान्यादेशयोर्भेदात्स्वं रूपमित्युक्तेश्च तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा ऽग्रासनादीनि लभत इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । न तु स्थान्यलिति । प्रत्यासत्तिन्यायलब्धमिदम् । आदेशस्य स्थानिभूतो यो ऽल् तत्सम्बन्धी च यो ऽल् तद्वृत्तिधर्माश्रयेणेत्यर्थः । अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति भोभगो इत्यत्र भाष्ये स्पष्टम् । ऋधातोर्द्वित्वे ऽभ्यासस्योरदत्वे ऽरित्यस्य हलादिः शेषस्तु ऋरित्यस्य पुनः पूर्वोऽभ्यास इत्यनेनाभ्यासत्वात् । तस्यापि द्विरुक्तधातुरूपभागत्वात् । प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात् । अत एव धिन्वन्तीत्यादावपि न । उकारवृत्तिधातुत्वस्य वकारे ऽनतिदेशात् । यत्त्वत्रेणिदस्य स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये सा त्वेकदेश्युक्तिः । असिद्धवत्सूत्रेण सिद्धस्यायनादेश्चेत्यादेस्तत्फलत्वेनोपन्यासात् । अस्यापि अचः परत्वविज्ञानादिति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च । प्रदीव्यत्यादौ च वलादिलक्षण इडन । स्थान्यलित्युक्तेर्भविष्यत्यादौ वलादिलक्षणेडभिहिते हि तत्र वलादित्वं स्थानिनो लभ्यं किन्तु स्वाश्रयमेव । यत्रैकनिमित्तविकल्पप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तत्र निमित्तस्य स्थान्यलसाधारणधर्मत्वेनैव निषेधप्रवृत्तिः । प्रकृते चार्धधातुकत्वविकल्पप्रयुक्ता ऽप्राप्तिरिति तत्स्थान्यलसाधारणं यच्च तादृशवलत्वमपीति वलादित्वं तु तद्विकल्पप्रयुक्ता ऽप्राप्तिरिति बोध्यम् । प्रत्यासत्त्या च शास्त्रीयकार्यस्य स्थानिवत्त्वे तेन नायकादिसिद्धिः । प्राधान्यात्कार्यातिदेशो ऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशाद्भिन्नरूपः । तस्यापि कार्यफलकत्वादिति तुच्छत्वमत्र कैयटः । भाष्ये ऽपि तत्राङ्गशास्त्रातिदेशात्सिद्धमाह यत्कार्यं तदतिदिश्यत इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तच्चानपेक्षितार्थसंविधानस्तत्तच्छास्त्राभिमतरूपकार्यस्य व्यवहारे एवानेन । कार्यं तु स्वशास्त्रेणैवेति । अत एव रामायेत्यादौ स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ इति सङ्गच्छते । पृथिवीरित्यादौ परत्वाद्दीर्घ इति च सङ्गच्छते । यद्वा किं चिन्निमित्तविकल्पे ऽपि दीर्घादिकार्यमनेन क्रियते तच्च कार्याद्भिन्नमित्याकाङ्क्षाया तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्दर्शनेन परशास्त्राविहितत्वरूप परत्व तेषां बोध्यम् । एतदेवाभिप्रेत्यातिदिश्यमानकार्याणामुपदेशगदेश एव दृश इत्यभियुक्ताः । अत्रायं पक्ष एव भाष्यसम्मतः । अत एव स्थान्यल् विधिप्रतिषेधे कुरुधीपवा प्रतिपद्या वक्तव्य इत्यतदुपपादनावसरे स्थानिवद्भावादङ्गसंज्ञा स्वाश्रय च लघूपधत्वादि तत्र लघूपधगुणादिः प्राप्नोतीत्यादिभाष्याकारीति बोध्यम् । एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृ-

त्त्वादिनिमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि । अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादिव्यवहारः । सर्वातिदेशेऽपि च तुल्यं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव प्रत्यासत्तेः । स्थानिवदित्युक्तेः संबन्धिशब्दमहिम्नैवादेशलाभे आदेशग्रहणं श्रौतस्यान्यादेशभावस्येव ग्रहणमिति शङ्कावारणद्वारा अहरित्यादौ शब्दानित्यत्ववारणाय सर्वे सर्वपदादेशा इति न्यायेन कल्प्यमानस्य लेस्तुरित्यानुमानिकादेशस्य सङ्ग्रहार्थम् । तेन पचत्वित्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम् । ननु तादृशस्थानित्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव सिद्धम् । तदुक्तं प्राग्दीव्यतोऽणिति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवदिति, अत एवात्र विकारोऽशास्त्रीयोऽपि । अत एव आयसशब्दादण्णन्ताद्द्विवचने आयसावित्यत्र वृद्ध्या कृतायाः सान्तस्याङ्गत्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसंबन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारितोऽचः परस्मिन्निति सूत्रे भाष्ये । एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभं अन्तादिवत्सूत्रे भाष्यकैयटयोरपि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्योदके केवलेऽति पूर्वपदान्तोदात्तत्वमुक्तम् । शब्दानित्यत्वं रेखागवयन्यायेन समाधेयम् । अनन्यवदित्यस्यान्यवदित्यर्थः । तत्रान्यमात्रस्य निषेधे ऽन्यत्वाभावः सुतरामिति चेन्न । अदृष्टस्यान्यथात्वे जातिव्यञ्जकभूयावयवदर्शनाभावेन तोतिन्नप्रतीतिन्यायेनानुपपादनात् । किं च तिङ्भसंज्ञायास्त्वादिसूत्रापात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूने ऽधिके वा शास्त्रव्यापारं विना ऽप्रवृत्तेर्येन विधिरिति सूत्रे ऽङ्गसंज्ञासूत्रे च भाष्ये उक्ततया तदभावात् । न्यूनाधिकत्वस्य वैरूप्यस्योपलक्षणम् । न च लगड्डुलादित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वे ऽपि स्वतः प्रत्ययान्ते भवत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम् । अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव जहीत्यादौ आदेशस्यासिद्धवत्त्वे स्वाश्रयो हलुग्न । सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु शाधीत्यादौ स्थानिप्रयुक्तधिभावसंपादनेन चरितार्थम् । न चापत्यय इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम् । वेः स्कन्देरनिष्ठायामिति षत्वविधायके तिङन्तेषु षत्वाभावायावश्यकेन न्यायेन चानिष्ठायामिति पर्युदासेन कृत्यादिसम्मतेन पर्युदासलभ्याशास्त्रीये ऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । विस्कन्त इत्यादौ हि निष्ठान्तत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारि-

व्याख्यानाद्द्वेधा कार्यसिद्धिरिति बोध्यम् । केचित्तु भाष्ये तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः स्वं रूपमित्येतच्छास्त्रमन्त्याद्दन्तः कार्यं यथा न स्यादितीत्युक्तमेवञ्च स्वं रूपमिति शास्त्राविषये ऽनेन सिद्धिरिति सूचितमेवं चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येवातिप्रसङ्गस्तु तत्स्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो यदि प्राप्नोति तत्रञ्च न कश्चिद्दोषः । न पदान्तेति सूत्रे ब्राह्मणकण्डूतिरित्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिच् तत्राल्लोपे तस्य स्थानिवत्त्वादुवङ् यणि सानादिद्वादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः । अत एवार्थवत्सूत्रशेषे ऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च कण्ड इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाद्दोषः शाङ्कितो न तु स्वाश्रयप्रत्ययान्तत्वेन । स्त्रियो दीर्घादिति सूत्रे भाष्ये ऽप्यतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि स्त्रिय इत्यत्रेयङ्घं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्यैव तर्हि अतिदेशकानां स्वाश्रयाणि न निवर्तन्त इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेणाप्यनेनैवाशङ्क्य निर्देशसामर्थ्याद्विभक्तिरित्युक्तम् । अपसिद्धान्तश्च च कैयटे स्फुटमेतत् । यत्तु गाङ्कुटादिसूत्रे भाष्ये सृजिदृशोरित्यत्राकितीति पर्युदासात्समृक्षतीत्यत्र हलन्ताच्चेति कित्त्वातिदेशे ऽपि अमागमसमाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितं तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोध्यम् । अनल्विधाविति । विधिग्रहणादलाश्रये विधावित्यर्थात् यत्र विधौ शब्दतः स्थानिस्थान्यवयवान्यतरात्तृत्तिधर्मवत्त्वेन तस्मात्तस्य तस्मिंस्तत्रेत्यादिप्रकारेण विशेष्यतया विशेषणतया वा आश्रयणं तत्र निषेधः । व्यूढोरस्केन द्युभ्यां कश्टः सपठेत्युदाहरणानि । शब्दत इत्युक्त्यवधीदित्यादावपि इटीति सिद्धमिति । दीर्घविधावत्र चेट इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्यल्विधित्वं स्यात् । अत्र सूत्रे विशेषातिदेशो ऽपि । अन्यथा इहादेरपि रुक्षः सत्त्वात् वलादित्वस्य तद्विशेषधर्मत्वात् उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदेशेन सिद्धौ विशेषणतया ऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्यानल इत्यस्य सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हलादिक्ङिविमित्तकेत्त्वप्रतिषेधकाव स्यपीति लिङ्गाच्च अनुबन्धकार्ये त्वनल्विधाविति निषेधो न अनुबन्धानामनेकान्तत्वात् । एकान्तत्वे ऽपि शिद्ग्रहणेन तेषामलव्यवहाराभावज्ञापनात् । नानुबन्धकृतमनेकाल्त्वमिति ज्ञापयतीति भाष्ये

ऽनल्त्वव्यवहाराभावबोधनद्वारेति शेषः । ध्वनितञ्चेदं क्ङिति च गाङ् लिटि हलः श्न इति सूत्रेषु भाष्ये । तत्राद्ये यासुटो ङिद्वचनान्ङिदादेशाङ्ङितो नेति ज्ञाप्यते इत्युक्तं द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेशत्वकार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितञ्च ज्ञापकम् । अन्त्ये शानचः शित्त्वस्य सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तं उक्तदूषणेनैव दूषितञ्च । अन्यथा ऽनल्विधाविति निषेधेन तस्याप्राप्त्या ज्ञापकत्वासङ्गतेः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोध्यम् । अचः पर ॥ आदेशग्रहणमनुवर्त्तते तदनुरोधाच्च इति स्थानषष्ठी, परस्मिन्नित्यादेशविशेषणं तदाह । परनिमित्त इत्यादि । अच एवादेश इत्यर्थः । तेन महनमाचष्टे मारयतीत्यादौ वृद्धिः । अत्र सूत्रे प्रयोगे यो ऽचः स्थानिक इत्यर्थः । न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थस्तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति अत एव चङ्परनिर्ह्रासे यत्नात् णिचि अवीवददित्यादिसिद्ध्यर्थो निषेधः सार्थकः । अच इति किम् । आगत्य । मलोपस्य स्थानिवत्त्वात् ह्रस्वस्येति तुग्न स्यात् । परस्मिन्निति किम् । युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम् । नैधेयः । निपूर्वाद्दाञः किप्रत्यये आतो लोपे तस्य स्थानिवद्भावाद्द्व्यच्त्वव्यपदेशविरोधात्स्वाश्रयद्व्यच्त्वनिवृत्त्या ढगनापत्तिरिति दिक् । अत्र स्थानिनि सति यद्भवति तदादेशे ऽपि भवति स्थानिनि यन्न भवति तदादेशे ऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र भावोदाहरणं निगाल्यते इति, अभावोदाहरणं पटयतीत्यादि । स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वमस्यादनद्वारा लोपनिमित्तका वृद्धिरित्याहुः । स्थानिभूतादच इति । सत्र स्वगात्स्थानाच्च सत्येव पूर्वत्वबोधिस्त्वमिति भावः । पूर्वविधावित्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थस्तेन पूर्वपरयोर्विधौ न । तेनाऽरत्नीत्यादौ अत्रत्यृतामिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतो ऽत्र पूर्वविधिशब्दे तन्त्रमेकस्याकार्यः । द्वितीये भावे क्तिः । सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भाव पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदित्यर्थे । अत एवैनेय इत्यादौ यस्येति चेति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव नपदान्तसूत्रे पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इति लुकि न स्थानिवदित्यस्योदाहरणं दत्तं भाष्ये । अन्यथा तत्र पूर्वस्येन दृष्टस्य सम्बन्धिनः कस्य चिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तेरेवेति तदसङ्गतिः स्पष्टैव । प्रकृतसूत्रे ऽपि भाष्ये कर्मसाधनस्य विधिशब्दस्योपादानेन सर्वमिष्टं संगृहीतमिति भावसाधनो विज्ञायते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवदिति उक्तम् ।

तत्र भावसाधन इत्यस्य सो ऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणमव्यवहितग्रहणे मानाभावात्स्वरे निषेधाच्च तेन पटयतीति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वमिति । न पदान्त ॥ अत्र द्विर्वचनसवर्णादिग्रहणं वत्तिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थं तेन राम इत्यादौ विसर्गादिसिद्धिः । अत्र विधिशब्दो भावसाधनः । पदान्तेत्यत्रान्तशब्दश्चरमावयववाची कर्मषष्ठ्या समासः । तेनैषो ऽयन्हसतीत्यादावेतत्तदोरिति सलोपो न । इणः शतरि यन्निति रूपम् । तत्र यणः स्थानिवत्त्वादुत्वे च न स्थानिवत् अनेन निषेधात् । स्पष्टञ्चेदं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितम् । अत्र पदे ऽन्त इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या प्रपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति वेतस्वानित्यादौ न दोषः । न चैवमपि पूर्वत्रासिद्धीये न स्थानिवदिति निषेधो ऽत्र दुर्वारः । पदे ऽन्त इत्यर्थेन तत्रस्थानिवत्त्वनिषेधज्ञापकपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयववर्णायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात् । अत एव सांहितिकानित्यत्र जश्त्वं न । सूत्रे जश्पदेन झलां जशोऽन्त इत्यस्यैव ग्रहणं चरमचिह्नितस्यैव ग्रहणौचित्यात् । कार्यकालपक्षे ऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्ततेऽति वक्ष्यते इति न तयास्य सिद्धिः । गोचेत्यादौ गतिकारकोपपदानामन्यस्थानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः । उत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे सत्येवेति न दोषः । पदे इति पदत्वयोग्योपलक्षणं वा । अत्र तु भाष्यमपि मानम् । अत्र पदचरमावयवादिसाधकः प्रतिबन्धकश्च स्थानिवद्भावो निषिध्यते विनिगमनाविरहात् । एतस्य च भाष्यकर्मणोर्ङित्यादिसूत्रभाष्ये: पूर्वत्रासिद्धे न स्थानिवदित्यस्य वरे यलोपस्वरदीर्घवरणाजद्विर्वचनादिप्रत्याख्यानमिति लभ्यते । निषेध इति । द्विर्वचनवरणात्पूर्वत्रासिद्धे इति निषेधादिति भावः । इकार इति । स्थानत आन्तर्यादिति भावः । अदर्शनम् ॥ स्थाने इति वर्तते प्रसङ्गे सतीति तदर्थस्तदाह प्रसक्तस्येति । शास्त्रतो ऽर्थतो वेति भावः । अत्र दृशिज्ञानसामान्ये तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता सत्ता निषिध्यते तत्र प्रत्ययलोपे शास्त्रतो ऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन् विषये ऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोध्यम् । अर्थस्यैवासत्ता व्याख्यानात् । यत्तु प्रसक्तस्येति किं ग्रामे तिष्ठतीत्यादौ ल्यब्लोप इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपो ऽदर्शनम् । शास्त्रतो ऽर्थतश्च न तत्प्रसक्तिरिति न दोष इति तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेन तस्याप्राप्तेः । तत्त्वे तु प्रत्ययेनार्थतो ल्यबन्तस्य प्रसक्तेः ।

तस्मात्तपु इत्यत्र क्विपोऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्स्नत्ययेन प्रकृत्याक्षेपस्तु न । अत्रैव प्रकृतिं विना ऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भवात् । इति पदे इति । विनिगमनाविरहादिति भावः । द्वित्वस्य त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव दध्यत्रेति भाष्ये उदाहृतम् । धकारयकारयोरिति । तेन विसर्गादिद्वित्वेनाधिक्ये ऽपि न क्षतिः । द्विधमिति । द्विधत्व प्रक्रियायां बोध्यम् । एकस्या आकृतेश्चरितप्रयोगो न द्वितीयस्या भविष्यतीति कृत्स्नानुप्रयुज्यत इति सूत्रभाष्याभ्यां कृत्यानेकस्य द्वित्वे परस्य तदभावो ऽनुचित इति न वाच्यम् । सार्थकानर्थकविषये तन्न्यायाङ्गीकारात् । यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयत्वाच्च । हलो यमामिति लोपे द्वित्वाभावे चैतदेव रूपम् ।

नादिन्या ॥ यरो ऽनुनासिक इत्यतो यर इति वर्त्तते पुत्रशब्दस्यत्यवयवषष्ठी । आदिनीशब्द परइति च प्राधान्यात्पर एव विशेषणम । सूत्रे आदिनीति इयन्तानुकरणात् लुप्तसप्तमीक अत एव तत्परे चेत्यस्यादिनीशब्दो यस्मात्परस्तत्र परे इत्यर्थ हरदत्तो व्याख्यत् । अदुतो माधवो ऽप्येवमेव । ईदृश आक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो निन्दा तदाह । पुत्रादिनीति । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह पुत्रहतीति । अनचि चेति सिद्धे पुत्रस्य क्वान्ते चेत्तजग्धयोराक्रोशगर्वेति नियमार्थमिदम् । संयुक्तेष्विति । त्रिप्रभृतिष्विति सूत्रे वर्णानां सजातीयानामेव यत्र परस्परसाहचर्यात् । न च तथात्र सम्भवति । अत एवाचो रहाभ्यामिति सार्थकम् । निर्धारणे सप्तमी । अच इत्यनुवर्त्तते त्रिप्रभृतिसंयुक्तवर्णमध्य एव परस्य यरो द्वे वा न स्त इत्यर्थः । तेनेन्द्रः राष्ट्रमित्यत्र नकारषकारयो प्राग्द्वित्वस्यैव निषेधविकल्प । अनचि च सर्वत्र शाकल्यस्येत्येव सिद्धे इद सूत्रद्वय विकल्पस्य मतभेदप्राप्त्यव्यवस्थाविधानार्थमिति बोध्यम । यरो ऽनुनासिक इत्यतो वेत्यनुवृत्त्या ऽनचीत्येव सिद्धे तु सूत्रत्रयमपि तथेति बोध्यम ।

अचो र ॥ अच इति श्रुतत्व व्याख्यानाच्च रहाभ्या सबध्यते । तस्मादित्युत्तरस्येत्येतल्लभ्यमाह । अचः पराभ्यामिति । वा यमीति । झरो झ इत्यतो ऽन्यतरस्यामित्यनुवृत्तेरिति भाव । दीर्घादाचार्याणामित्युत्तरमनुस्वारस्य ययि वा पदान्तस्य, तोर्लि, उदःस्था, झयोहो, शश्छोटीति षट्सूत्रीपाठात्त झलां जश् झशि, अभ्यासे चर्च, खरि च, वावसाने अणो ऽप्रगृह्यस्येति पञ्चसूत्र्या पाठ इति भाष्यसम्मताष्टाध्यायीपाठे तु वावसाने इत्यतो ऽनुवृत्तिर्बोध्या । स्पष्टञ्चास्य वैकल्पिकत्व लण्सूत्रे भाष्ये । आदित्य इति । आदित्यशब्दाद्देवार्थण्यन्ताद्देवतार्थे ण्यः यस्येति चेत्यल्लोपे ऽनेन यलोप ।

आपत्यस्येति तु न । आपत्यत्वाभावात् । हल इति किम् । शय्या । यमामिति किम् । आर्धात् । यमीति किम् । रामाभ्याम् । एचोऽय ॥ इचोऽचि यणयवायावः अवावौ यि प्रत्यये इति सूत्रयितुमुचितमित्याहुः । यथासंख्यसूत्रलभ्यमर्थमाह । क्रमादिति । उदात्तादिगणायकानामन्यगणाकख्याऽऽश्रितिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या । एतद्वाभिप्रेत्य यथासंख्यसूत्रे भाष्ये प्रकृतसूत्रे स्थानेऽन्तरतमसूत्रेण व्यवस्थोक्ता संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण इति । एतद्भाष्यप्रामाण्येन एओरित्यनयोरकारांशे संवृतत्वं इतरांशे विवृततरत्वं तदुपरागाच्च न संवृतत्वस्य पृथग् ग्रहणम् । ऐऔ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेवेति बोध्यम् । तस्य लोपः ॥ उपदेशेऽजित्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धे तस्य ग्रहणं सर्वलोपार्थं तेन ञिटुडूनामन्त्यस्य लोपो न । नानर्थके इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक् । न भवतीति । फलाभावादिति भावः । वान्तो ॥ येन विधिरित्यस्यापवादभूतया तस्मादुइचीत्याद्यर्थमाव श्रियकया आनन्तर्या यस्मिन्विधिस्तदादावल्ग्रहणे इति वार्त्तिकलब्धपरिभाषया लभ्यमर्थमाह । यकारादाविति । ओदौतोरिति । ओदौतोरिति वक्तव्यमिति वार्त्तिकमनाग्राह्यानादिति भावः । पूर्वसूत्रे वान्तो यीति तयोरेव स्थानित्वनिर्णयादिति स्थानेऽन्तरतमसूत्रस्थकैयटोक्तं तु न युक्तम् । वान्तज्ञानाय सूत्रपर्यालोचनस्यावश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात् । यथासंख्यसूत्रसहकारेण बोधात्तत्र तयोस्तत्त्वनिर्णयात् । अन्तरतमपरिभाषया निर्वाहे तु तत्पर्यालोचनकाले तन्निर्णयः । अत एव पूर्वसूत्रे स्थानिविशेषलाभो यथासंख्यसूत्रादिह तु निमित्ताभावात्तल्लाभाभाव इति षष्ठे प्रकृतसूत्रे कैयटः । गव्यमिति । भत्वाट्टिलोपो न । यीति किम् । गोभ्याम् । प्रत्यये किम् । गोयानम् । ननु गव्यूतिरित्यत्र वस्य हलि सर्वेषामिति लोपः शाकल्यस्येति वा लोपः स्यादत आह । वान्त इत्यत्रेति । न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम् । निमित्तस्यानाक्रान्तविषये कार्यित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायस्यानवकाशविषयो विधेयविषयत्वेति स्पष्टं तदितेष्वचामिति सूत्रे यङ्विधायके च भाष्ये अन्ये उत्तरपदविषये विशेषासम्प्रत्ययाच्चित्यग्रहणानर्थक्यं क्रियासमभिहारे च नेतिभ्यां यङा भवितव्यमिति भाष्ये चेन विशेषासम्प्रत्ययादित्यनुक्रम्यते अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासम्प्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः । निरूपयिष्यते चेदं यङन्ते । तस्य च वार्त्तिकेऽनुवृत्त्या यूतौ प्रयमाणवकारान्त आदेश इत्यर्थः । सूत्रे तु न फलं,

गव्यादौ भत्वेन वान्तस्य पदत्वाभावाल्लव्ये स्वत एव तदभावाल्लोपाप्राप्तेः । गोशब्दादिभ्यः क्यजादावपि नः क्ये इति नियमेन पूर्वस्य पदत्वाभावात् । एवन्तर्हि वार्त्तिकएव प्रश्लेष उचित इत्याशयेनाह । छकारादिति । लोपो व्योरिति सूत्रे वकारप्रत्याख्यानं तु लौकिकोदाहरणाभावेन तदर्थतया बोध्यम् । अत एवैको गुणेति सूत्रे ऽतो ल्रान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तं भाष्ये । शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशयः । न चैवं विण्वे इत्यादौ तस्य लोप इति द्वकारे गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यम् । गवि च युक्ते इत्यादिनिर्देशैवारणात् । परे तु सा पूर्वपदस्योक्तिरिति न वकारप्रश्लेषो लोपेनोचितः । किञ्च छन्दसि सर्वे विधीनां व्यवस्थितत्वात् वलोपप्रसक्तिस्तत्र त्वे गव्यूतौ + अध्वपरिमाणे ऽपि + सञ्ज्ञाशब्दो ऽयम् । तत्र सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः । यथा रघुनाथेति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः । सर्वनामशब्दे णत्वाशङ्का तु तस्य सञ्ज्ञाविशेषे आधुनिकविनियोगात् शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण । निरूपितश्चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्योते इत्याहुः । निरूपयिष्यते चैतत् पूर्वपदात्सञ्ज्ञायामिति सूत्रे । धातोस्त ॥ धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च गव्यमित्यत्र न स्यात् । वायत इत्यत्र च स्यात् तदभावे सामान्यतो नियमापादनन्तु योगविभागे वकारवैयर्थ्यापत्तेरयुक्तम् । तन्निमित्तस्य चेद्भवतोरेवेति नियमे बाभ्रव्यामिदुस्तदुद्धरणायैवकारः । लव्यमित्यादि । अत्र गुणवृद्ध्योर्यदृणनिमित्तकत्वेनैव यादिप्रत्ययनिमित्तकता । तन्निमित्तस्यैव किमिति । सूत्रमेव किमर्थमिति प्रश्नः । वायत इति । वेञः कर्मणि लटि यकि यजादित्वात्सम्प्रसारणे ऽकृत्सार्वेति दीर्घे प्राप्ते सहाद्रुधः । नथानुनोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणो ऽसिद्ध इत्यन्तरेणाह । वायतेति । तस्मादेव कर्मणि लङ्घाडागमे वृद्धिः । शेषं पूर्ववत् । क्षय्यज ॥ क्षतये, जिजय, इत्यनयोरेव ग्रहणं न तु लोप हिमयाद्धे जे क्षय्यइत्यनयोर्व्याख्यानात् । अत एव क्षिज्यारेवेति भाष्ये उक्तम् । तस्मै प्रेति । क्रयार्थे वस्तुनि क्रय्य इति निपात्यत इत्यर्थो व्याख्यानात् । गुणभूतस्यापि तदा परामर्शः । क्रयार्थत्वञ्च फलाप्रधानरूपतदर्थं इति विशेषणात्तदाह । क्रनार इति । योग्यतामात्रग्रहणे त्वव्यावर्तकं तत्स्यादिति भावः । केचित्तु स्वीयधान्यादि दत्त्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम् । यत्र तु स्वयं द्रव्यं दत्त्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रयम् । द्रव्यं तु न क्रय्यत्वं नापि क्रेयत्वं किं तु धान्यादेरेव शक्तिस्वभावात् । भाष्यस्वरसो ऽप्येवमेवेत्याहुः । लोपः शा ॥ भोभगोऽघोऽपूर्व

स्येत्यशीति चानुवर्त्तते तत्राकारान्तेभ्योऽतो गार्ग्यस्येति बाधकमित्याशयेनाह । अवर्णपूर्वयोरिति । व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह । यवयोरिति । स तम्माचष्ट इत्यादिभाष्यप्रयोगादत्र रोरित्यस्या सम्बन्धः । इदं सूत्रं लघुप्रयत्ने न । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किम् । गौर्यत्र । पदान्तयोः किम् । हरये । अशि किम् । वृक्ष व्रश्चतीति वृक्षवृः, क्विप् तमाचष्टे इति ण्यन्ताद्विच् । वृक्षव् करोति । क्विपि तु ठ स्यात् । विच्निमित्तको लोपो व्योरिति लोपस्तु न । णिलोपटिलोपयोः स्थानिवत्त्वात् प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन परपदस्याऽऽदेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च न पदान्तेति निषेधाप्रवृत्तेः । एतेन क्विन्निमित्तको वलोपोऽत्र दुर्वार इत्यपास्तम् । किं च स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्याऽत्र निषेधाप्रवृत्तिः । स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानमिदञ्च न पदान्तसूत्रे भाष्ये स्पष्टम् । न च पदसंज्ञाया टिलोपस्य स्थानिवत्त्वात्तस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति वाच्यम् । पूर्वत्रासिद्धीयमिति निषेधात्साक्षात्पदत्वाद्विद्वारकपरंपरया वा पूर्वत्रासिद्धीयप्रापकस्य प्रतिबन्धकस्य वाऽतिदेशस्य तेन निषेधादिति केचित् । परे तु न पदान्ता हलोऽणः सन्तीति लणसूत्रस्थभाष्याद्वृक्षवादेरनभिधानमेव । भोभगो इति सूत्रे ऽशग्रहणमनर्थकमन्यत्राभावादिति वार्त्तिकोक्त्या । अशोऽन्यत्र तन्निमित्तकार्यकार्यिणोऽभावादिति तदर्थः । न ह्यन्यत्र हाऽस्तीति तद्व्याख्यानभाष्ये रुग्रहणमुपलक्षणम् । एतदाशयमज्ञानानैकदेशिनोत्तरार्थं हलि सर्वेषामिति वृक्षव् करोतीत्यत्र मा भूदित्युक्तम् । अस्य चैकदेश्युक्तित्वं लणसूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम् । अत एव भाष्ये उत्तरार्थमित्युक्त्वा हलि सर्वेषामित्यत्रैव प्रयोजनमुक्तम् । हलि सर्वेषामित्यत्र वकारनिवृत्त्यैवात्र तद्वारणसम्भवाच्च तत्राप्यशग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः । कानि सन्तीति । वाक्यसंस्कारपक्षेऽपि पूर्वापरस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरिनोऽकारादेः स्थानिभूतादचः पूर्वत्वं बोध्यम् । एकः पूर्व ॥ गुण इत्यादेर्विधेयसमर्पकत्वेन तत्रैकस्यषष्ठ्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पुत्रयोः कटं कुर्वित्यादिव इवोभयसम्बन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् । उरण् ॥ उः स्थाने इति षष्ठी स्थाने इतिपरिभाषालभ्यम्, उदात्तस्वरितयोर्यण इतिवत् । स्थानेऽन्तरतम इत्यतः स्थानेग्रहणमनुवर्त्तते तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह, रपरः सन्नेवेति ।

रपर इत्यवयववाचिना परशब्देन बहुव्रीहिस्तेनास्यावयवत्वात् यदागमा इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन अकारस्य गुणवृद्धी अरारावेवेति नियमोपपत्तिरत एव रदाभ्यामिति सूत्रे यलि च सेटीति सूत्रे च भाष्ये गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञको ऽभिनिर्वर्त्तत इत्युक्तम् । उः स्थाने ऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्यप्र गुण इति कैयटः । अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि । अन्यथा वर्णस्य वर्णान्तरावयवत्वं हलन्त्याच्चेति सूत्रभाष्योक्तरीत्या ऽसङ्गतं स्यात् । पञ्चम्यर्थं बहुव्रीहिणा ऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतद्वाक्यतया विधानं स्यात् । गुणान्यादिकत्वकाराऽदिविष्टमेव स्यादित्युक्तनियमानुपपत्तिः । अत एव वव्रे इत्यादौ हलादिःशेषमिद्भ्यामावयवस्यैवानादेस्तेन निवृत्तिः । एतेनाणमनूद्य रपरत्वं विधीयत इति परास्तम्, उक्तनियमानुपपत्तेः । अत्र पक्षे क्व रपरत्वं क्व लपरत्वमिति व्यवस्थानुपपत्तिस्तु न । रेफवत्स्थानिकस्य रेफपरत्वं लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासंभवात् । तत्रान्तरतम्यादिति । स्थानत इति भावः । रेफादिदुष्टा ऽऽदेशस्यापि मूर्द्धादिस्थान त्वात् । तत्र तत्रादेशानेव रलपरानुच्चारयेद् सूत्रं न कार्यमिति तु न वाच्यम् । आपृच्छ्यधामीत् भृत्राामिदित्यादौ दोषापत्तेः । अत्राण पूर्वेणैव प्रशास्त्रणामिति निर्देशात् । वस्तुतो रपत्याहाराभावेन रपर इत्यस्य स्थाने लपर इति पठनीयमिति लपरत्वं वक्ष्यामीति तुल्यास्यसूत्रभाष्याल्लभ्यते । झरो झ ॥ झयो ह इत्यतो वा ऽवसाने इत्यतो वा विकल्पो ऽनुवर्त्तते । हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम् । लोपे इति । अप्रधानेऽभिर इति भावः । असतीति । द्वित्वाभाव इत्यनुकृष्यते । त्रिधर्मेति । त्रिधकारत्वं प्रक्रियाभिप्रायेण । न च द्वित्वाभिवे पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थकेन पूर्वत्रासिद्धमद्वित्वे इत्यनेन धातुधकारस्य जश्त्वे दृष्य द्वित्वमितीदमयुक्तमिति वाच्यम् । फलं विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषो ऽस्ति । तदनन्तरञ्जश्त्वप्रवृत्तिस्तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । पञ्चमीति । विनिगमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् । कृष्णैकेति । कर्ष्णेति संबुद्ध्यन्तं पृथक्पदमिति कश्चित् । एत्येध ॥ कठ अत्रादेश एव व्याख्यानात् । एतीति नोठो विशेषणमूठस्तस्यासंभवात् । एत्येधत्यारिति योगं विभज्य तयोरेवेतीति विशेषणस्य भाष्ये कृतत्वाच्च तदाह, एत्रात्यारिति । एतिरत्येणैव प्रसिद्धत्वात् । उपेतीत्यादौ वृद्धिरेवेत्यनेन गतार्थत्वमाशङ्क्याह । पररूपगुणेति । एत्येधत्योरोङ् पररूप-

स्योऽठि चाद्गुणस्येति विवेकः । उपैधत इति । अत्र न सर्वादेशः । एत्येधत्या-द्यवयवेत्वोत्ववद्भ्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्य-भाष्यस्वारस्यात् । वृत्ते णाविति वदेत्येधत्यूठ्स्विति सप्तमी बोध्या । प्रष्ठौह इति । प्रष्ठं वहतीत्यर्थे वहेर्ण्विः ततः शस्यूठि संप्रसारणे पूर्वरूपे ऽनेन वृद्धिः । प्रौढ इत्यादीति । परं त्विणीकारादौ प्रतिषेध इति वार्त्तिके एधत्यनु-पादानान्न स्वधनेऽव्यभिचारादिति वृत्तिश्चास्यानभिधानमेव । एत्येधत्यो-रेवेति विशेषणमिति भाष्यस्यैधत्यंशे संभवमात्रेणोपरञ्जकतया विशेषणमि-त्याशय इत्याहुः । उपैधयतेत्यादावपि वृद्धिर्भवत्येव । प्रकृतिभागस्यैधरूप-त्वात् । किं च एत्येधत्यवयवे ऽचीत्यर्थः प्रत्ययलक्षणसूत्रभाष्यसंमत इति अत्र न दोषः । पुरस्तादिति । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायः । अवश्यं स्वपरस्मिन्बाधनीये भेदेनापेक्षायां प्रथमो-पस्थितबाधेनाकाङ्क्षानिवृत्तिरिति तद्बीजम् । असाधुरेवेति । आङ्गुणैकादेशस्य पूर्वान्ततया उपरूपेण बाधादिति भावः । अर्थवद्ग्रहणादिति । अस्या बीजं एव रूपमिति सूत्र उक्तम् । पररूपं प्राप्त इति । पूर्वस्यानुः साधनेन युज्यत इति सिद्धान्तादिति भावः । उपसर्गादृति ॥ तपरकरणादुपकारीयतीत्यादौ वा सुपीति न वृद्धिः । मात्रर्चतिस्तु न गृह्यते व्याख्यानात् । अदित्यनुवृत्तेन तदन्तविधिरित्याह, अवर्णान्तादिति । यस्मिन्विधिरिति परिभाषयाह । ऋकारादौ धात्विति । पूर्वपरयोस्तयोः समुदाययोरन्त्यादौ वर्णयोरेकादेश इत्यर्थः । उपसर्गावयवाकारादुत्तरावयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्युचि-तम् । गतेरिति नु नेष्टम् । प्रक्षतीत्यादौ दोषात् । अन्तादि ॥ इह पूर्वपरयोरिति वर्तते पदाभ्यां च अन्तादिवच्छब्दावुपस्थितैकादेशस्यातिपरौ । पूर्वपरशब्दौ च तद्घटितसमुदायपरौ । एवं च पूर्वस्य परस्य समुदायस्या-न्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुबन्त-त्वप्रत्ययत्वादयस्ते एकादेशस्य भवन्ति न तु तद्गुणमात्रवृत्तया ऽत्वह्रस्व-त्वादय इत्यर्थस्तत्फलितमाह । यो ऽयमित्यादि । तेन रामावित्यादौ परादिवत्त्वेनौ इत्यस्य सुप्त्वं पूर्वमन्तस्यैकदेशविकृतन्यायेन प्रकृतित्वं यस्मा-द्विहितस्तदादितदन्तस्यमार्थसमाजस्तमिति पदत्वसिद्धिः । तद्गुणमात्र-वृत्तिधर्मानतिदेशात् खट्वाभिरित्यत्रात्वनिवृत्त्येन ऐस्, अयजे इन्द्रमित्यादौ सवर्णदीर्घश्च न । अत एव तुक्यसिद्धवचनं चरितार्थमन्यथा ऽधीत्येत्या-द्यावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । तदुक्तं वर्णा-श्रये नास्त्यादिवत्त्वप्रतिषेधो वक्तव्यो न वा ऽनातिदेश्यातिदेशादिति । अन्ता-दिवद्धर्ममात्रवृत्तिधर्मानतिदेशादिति तदर्थः । वीरपेणत्यादावेकारविशिष्ट

एकाजुत्तरपदत्वं भवत्येव । स्थानिवद्भावेन तु नैतल्लभ्यं अप्राधान्येनाश्रयणात् । किं च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति भो ईभिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः । धातुत्वस्यैकादेशस्थानिधर्मत्वाभावोऽस्त्यानुमानिकादेशकल्पकवाक्यमन्तादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव न तु प्रत्येकं तयोः स्थानित्वबोधकं तथा सति स्वाश्वशब्दस्य स्थानित्वेन स्वशब्दतया तत ईरिन्यादौ वृद्ध्यापत्तेः । किं च भवत्संमतस्योभयत आश्रयणेनान्तादिवदित्यस्य सङ्गत्या भवत्संमताभीयादित्याद्यसिद्धिः । स्थानिवत्त्वे तूभयत आश्रयणं दृष्टमेव अन्यथा ऽचः परस्मिन्नित्यस्याप्युभयत आश्रयणेऽप्रवृत्त्यापत्तौ प्रायतेत्याद्यसिद्धिरिति दिक् । निर्दिशादिति । न च कर्त्तरि वर्णीत्यादौ गुणस्य पदद्वयसंबन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्गाभावेन न विसर्ग इति वाच्यम् । गुणस्येव पदद्वयसंबन्धिरेफस्वरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् । किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम् । न चानया पूर्वस्यासिद्धत्वाद्भावेन त प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः एवञ्च विरोधात्कार्यकालपक्षे ऽपि तदनुपस्थितिरेव त्रिपाद्यामस्य ऽन्तरङ्ग उचिता । अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा अयुक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तम् । एवञ्च तत्र तत्र वचनान्येव कार्याणि ज्ञापकानुसरणं वा कर्त्तव्यम् । अत एव निपात्यत इत्यादौ नत्वाद्यं तस्य द्वाप इति वचनमेवारभ्यम् अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे चक्ष्यत्र माधवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । यत्तु तत्स्थानुरोधात्कार्यकालपक्षे उपस्थितयान्तरङ्गपरिभाषयानसिद्धया प्रत्ययासिद्धस्यापि पूर्वत्रेत्यस्य बाध इति । तन्न लक्षणैकचक्षुषामादरणीयमत एव रोरीति सूत्रे रेफस्य पूर्वान्तत्वे विसर्जनीयप्रतिषेधो वक्तव्यो नाकूटादर्थमित्युक्तं भाष्ये इति दिक् । उपसर्गेणैवेति । तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थं क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः प्रर्द्ध इत्यत्र न । पुनरिति । प्रकृतसूत्रे भाष्ये स्फुटमेतत् । सुब्धातावेवेति । सुबन्तप्रकृतिके धातावित्यर्थः । तस्यास्य सूत्र उपाकारीयतीत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया तत्प्रकृतिक इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धिः । उपेत्यस्या-

नुपसर्गत्वात् । अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं तेन सुख्याता-र्यपि न प्रकृतभाग् । प्रार्षभीयतीति । अत्र शरोचीत्यस्यानुपन्यासेन व्यञ्जना-न्तस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेनाचो रहाभ्यामित्यस्य तन्निषेधस्य चानावश्यकता सूचिता । वाक्यभेदेनेति । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । एवं चेति वार्त्तिकं अत्र धातावित्यनुवृत्तेरारब्धम् । अवधारणे नियमः । एवशब्दस्य क्वान्यमप्येतद्गुणमवधारणमसम्भवदूपानवक्लृप्त्यादि च तयोरन्त्योऽत्रैव-शब्दार्थ इत्यभिप्रेत्याह अनवक्लृप्ताविति । क्वेव भोक्ष्यसे इत्युक्तेः स्थलसङ्कीर्ण-त्वादिना नास्ति सम्भवस्तव भोजनस्येति गम्यते । अचो ऽन्त्या ॥ अच इति निर्धा-रणे षष्ठी । अन्ते भवो ऽन्त्यः । अन्त्यादीति गमकत्वाद्बहुव्रीहिः । मार्त्तण्ड इति । मृताण्डादागतो मार्त्तण्डः । आण्डस्य एव पररूपम् । ननु मार्त्तशब्दा-न्त्यात् तकारादकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न । एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । एतन्मूलकमेव व्यपदे-शिवदेकस्मिन्निति पठ्यते इत्यलम् । वस्तुत आरोपस्य नात्रोपयोगः । "शब्दज्ञा-नानुपाती वस्तुशून्यो विकल्पः" इति पतञ्जल्युक्तेरर्थाभावे ऽपि विकल्पात्मकं ज्ञानमत्र तदपि लक्ष्यानुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोध्यम् । पतञ्जलिरिति तु अञ्जलिः पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपात-नादिनशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु । गोनर्ददेशे कस्य चिद्वै-दञ्जलेः मत्स्याकारेणासमये पतित इत्यैतिह्यात् । ओत्वोष्ठयोः । अत्र समर्थप-रिभाषा नोपतिष्ठते समासे ऽङ्गुलेः सङ्ग इत्यादौ समासग्रहणेन पदविधिरिति सूत्रस्यास्मिन् भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्दे-श्यता तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात् ओत्वोष्ठादिमात्रस्य पदत्वाभावात् अवर्णान्तोत्वोष्ठयोरिति च तद्घटितसमास इत्यर्थाद्दन्त्योष्ठ्यो वः स्मृत इति प्रयोगसिद्धिः । अन्यथा प्रत्यासत्त्योष्ठाद्युत्तरपदकसमासएव प्रवृत्त्यापत्तौ तद-सङ्गतिः स्पष्टैव । ओतुर्बिडालः । ओमाङोः ॥ अत्रैङीति नानुवर्त्तते तेनैतदर्थ-कारेण सह ऋषभशब्दस्य समासे ऽकारर्षभ इत्यत्र पररूपे ऽकारर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः । प्रतिपदविधित्वस्य निरवकाशत्वस्य चैव बाधकत्वे प्रयोजकमिदञ्च मध्येऽपवादन्यायेनाद्येहात्यादौ वृद्धेरेव बाधकं स्यादिति वा-च्यम् । लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधि-त्वस्य बलवत्त्वप्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च । अव्यक्तशब्दा-नां ध्वनिरिति । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाक्षुद्रो ऽनुकरणे एव सम्भवतीत्याह । अनुकरणस्येति । पटालान्त्यस्येति न प्रवर्त्तते नानर्थ इति निषेधात् । आम्रेडितस्य वेति वक्तव्ये नाम्रेडितस्येत्यारम्भाद्वा । अत इति

त्रलेखनात् तत्र नित्यग्रहणे तद्व्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह। प्लुताः प्रगृह्याश्च वक्ष्यन्त इति। अचीत्यनुवर्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयोः प्रकृतिभावस्तद्भिन्ननिमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं तेन जानु उ अस्य रुजति जानू अस्येत्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव। एहि कृष्णेति। दूराद्धूते चेति प्लुतः। अत्र प्लुतस्याश्रयात्सिद्धत्वं बोध्यम्। नित्यमिति किमिति। वा ग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः। मा भूदिति। नित्यग्रहणसामर्थ्येन पुनर्विधानाद्बाधकविषये ऽप्ययमेवेति भावः। इको ऽसवर्णे। एङ इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह। पदान्ता इति। वेति। ह्रस्वयणोर्विधानसामर्थ्यात् न विकल्पसिद्धिः। अपदान्तादौ यणश्चरितार्थत्वात्। सामर्थ्यादेवेति। चेन प्रकृतिभावाकर्षणे ऽसिचन्यक इत्यत्र चानुकृष्टत्वेन तदसंबन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वेन न कारो व्यर्थ इति भावः। भाष्ये स्थितमिति। प्रकृतसूत्रे इति शेषः। एतेन ह्रस्वाभावे प्रकृतिभावार्थं चकार इति न्यासाद्युक्तमपास्तम्। चक्री अत्रेति तु संहिताया अविवक्षाया बोध्यम्। न समासे, सिति चेति वार्त्तिकम्। पार्श्वमिति। पर्श्वाणस्वकृच्य इति णास्सति चेति पदत्वम्। ऋत्यकः॥ सवर्णार्थमनिगर्थञ्चेदम्। हातृऋकारः। अन्यार्थः। आर्च्छदिति। आटो धात्ववयवत्वेनापदान्तत्वादिति भावः। एतेनाटश्चेति पुनर्वृद्धिविधानार्थेन चेनास्यामाङस्तु परकपत्राधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम्। समासे ऽपीति। व्याख्यानादिति भावः। सप्तर्षीणामिति। दिक्संख्ये इति समासः। प्रकरणद्वये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य प्लुतप्रगृह्या इतिसूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते। वाक्यस्य टेः॥ वाक्यस्येत्यभावे पदस्य टेरित्यर्थे ऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात्। तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव संभवतीति न दोषः। टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परिभाषया ऽजन्तस्यैव स्यात्। टिग्रहणे तु सामर्थ्याट्टिनाचो विशेषणाद्धलन्तस्यापि भवति। प्रत्यभिवादे॥ प्रणामादिभिराशिषं वाञ्छमानो गुर्वादिर्यत्प्रतिसंभाषते तत्प्रत्यभिवादः। न त्वाशीर्वचनं शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाशूद्र इत्यस्य वैयर्थ्यापत्तेः। अत एव भाष्ये ऽशूद्र इति किं कुशल्यसि तुषजकेऽन्त्यकम्। अभिवादये इति। नमस्कारपूर्वमाशीरादि वाञ्छयामीत्यर्थः। आयुष्मानित्यायुष्मत्त्वस्य विधेयत्वात्संबोधनविभक्त्यभावः। एधीति भवेत्यस्याप्युपलक्षणं प्रत्यभिवादे शर्मादिप्रयोगो न नियतः। एचो प्रगृह्यस्येति सूत्रे प्रत्य-

भिवादे ऽन्त्यस्यैवः प्लुतविधानात् । आयुष्मानेधि अग्निभूता इति भाष्ये तदुदाहरणाच्च । शर्मादिप्रयोगे तु तट्टेरेव प्लुतः । शर्मान्तं नाम ब्राह्मणस्येत्यादिस्मृत्या तस्य नामावयवत्वबोधनात् । स्त्रियां नेति । स्त्रिया अपि नाम्नाभिवादप्रत्यभिवादे इत्यर्थस्य भाष्यसंमतत्वादिति भावः । नामगोत्रं वेति । अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धे । तत्राधिकृतस्य पदस्येत्यस्य प्रत्यभिवादे इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः । तत्र नामशब्देन द्वादशे ऽन्हि पित्रादिकृतं गृह्यते । अत एवायुष्मान्भव देवदत्तेत्यादौ प्लुतो नेति स्पष्टं भाष्ये । भोराजन्येति । भोशब्दस्य राजन्यवैश्यवाचकनाम्नश्च टेः प्लुत इत्यर्थः । भोशब्दस्याप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम् । दूराद्धूते ॥ यावति देशे प्राकृतप्रयत्नोच्चारितं संबोध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तावद् दूरम् । दूराद्धूतञ्च दूराद्बोधनस्योपलक्षणं, न तु संबोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य संबोधनस्योपलक्षणम् । आगच्छतु भवान्देवदत्त इत्येवमाहूतस्यापि संभवात् । अत एवाकडारसूत्रे नदीगुरुसंज्ञयोः समावेशे वात्सीबन्धुरित्यत्र गुरोरिति प्लुतो नदीबन्धुर्नीति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये ऽन्यथात्र संबोधनाभावेन गुरोरित्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव । उपलक्षणत्वादसत्यप्याह्वाने भवति तदाह सक्तूनित्यादि । अत्रापि दूराद्धूत इत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । तच्च रूढं यौगिकं वेत्यन्यत् । हैहेप्र ॥ हैहयोः संबोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां संबोधनदर्शनेन च तयोरपि हूयमानार्थपरत्वाद् गुरोरनृत इत्येव सिद्धे नियमार्थमिदमित्याह । हैहयोरेवेति । हैहेन्त इत्यत्र सिद्धे प्रयोगग्रहणादनन्त्ययोरपि तदाह हे३ रामेति । के चित्तु एकं हैहेग्रहणमनन्त्यार्थम् । अन्यथा वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः स्यात्तदाह । हे३ रामेति । प्रयोगदर्शने तु यत्र संबोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य ज्ञापितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं तदाह । राम है३ इति । अन्यथा प्रयुक्तयोः प्लुतासंभवात्तद्वैयर्थ्यं स्पष्टमेव । हैहयोरिति तु तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थं, नियमे तु न मानं, तेनात्र प्लुतसमावेश, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु अत्र हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति तन्न । शिव हे इत्यादौ तस्याप्राप्तेस्तन्न्यायविषयाभावात् । गुरोर ॥ दूराद्धूत इत्यनुवर्त्तते तेन दूराद् बोधन-

एव प्रवृत्तिस्तदाह । दूराद्धूतइति । दूरत्वस्यात्राविवक्षितं तेन प्रत्यभिवादे भोराजन्येत्यस्य विषये ऽप्यस्य प्रवृत्तिः । तद्विषये ऽप्युपलक्ष्य बोधनसत्त्वात् । सर्वप्लुतप्रकरणस्य तु न शेषः । तथा हि सति वाक्यस्य टेरित्यनेन सहैवा-स्याप्यधिकारत्वमेव कुर्यात् । एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे ऽनुदात्तं प्रश्नान्तेति सूत्रे च वृत्तौ स्पष्टम् । अपिशब्दो यथाप्राप्तटिसमुच्चयार्थः । यदि तु गुरोः संविधानादन्त्यो गुरुरेव समुच्चीयते तदान्त्यलघुमति अनन्त्यगुरावेतस्यान्त्यलघौ दूराद्धूते चेत्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः । एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात् । तेन यत्रान्त्यो ऽपि गुरुरनन्त्यगुरुद्वयं वा तत्रैव पर्यायः स्याद्व्याख्यानाच्चैतदर्थलाभः । अनन्त्यस्यापीति । अपिनान्त्यस्य गुरोरगुरोश्चेत्यर्थः । पर्यायार्थमिति । अन्यथा समावेशः स्यादिति भावः । अनुदात्तं पदमिति तु त्रिपाद्यां न प्रवर्त्ततइति तत्रैव वक्ष्यते । प्राचामिति तु पदं सर्वथा प्लुताभावार्थम् । विकल्पतइति । सा च कार्त्स्न्यतोविभाषा । तेनाग्नीदग्नीन्विहरेत्यादावग्नीत्प्रेषणइति न । भाष्ये तु विभाषा पृष्टेति सूत्रे विभाषेति योगविभागो दर्शितः । सा कार्त्स्न्यतोविभाषेति कैयटः । अत एव आश्रावयेति परस्येति वक्तव्यमिति वचनस्याग्नीदग्नीनिति इत्यादौ प्लुतनिवृत्त्यर्थं कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्ये कृतं सङ्गच्छते । एतच्च भाष्यसम्मतया कार्त्स्न्यतोविभाषे-त्याहुः । अप्लुतवदित्यनुवृत्त्या प्लुत इत्यध्याहारस्तदाह । प्लुतो ऽप्लुतवदिति । प्लुत एव निपद्यतेति । तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्ततइत्यर्थः । प्रसज्य प्रतिषेधेन व्याख्यानं तु न युक्तम्, गौरवात् । किं च । तथा सति प्लुतप्रकरण एव नोपतिष्ठेतइति वदेत् । न च पर्युदासे ऽग्नी इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम् । शब्देन इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः । प्लुते ऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । भाष्ये प्लुतकार्यप्रतिषेधार्थ-मित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोध्यम् । प्रगृह्याश्रये इति । प्लुते कृते ऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत् तद्गतं प्रगृह्यत्वमनुकार्यं सुलभमनुकरणे तु प्रकृतिवदनुकरणमित्यतिदेशात्तत्त्वमिति भावः । किं मया कर्त्तव्यमिति पृष्ट आह । चिनुहीदमिति । विभाषा पृष्टप्रतिवचने हेरिति प्लुतः । इद-शब्दो ऽत्र वाक्यान्तरस्य इति हेरिकारस्य वाक्यटित्वम् । उभयत्र विभाषे

र्यामिति । उपस्थिते प्राप्ते ऽनुपस्थिते चाप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यतइति विभाषा गुरोश्च हल इत्यप्रत्यये टाप् । न वेति विभाषायामिति भाष्यप्रयोगात् । भाष्ये तु किमर्थमिदमुच्यते ऽनुपस्थितार्थं तत्र ईग्रहणेन नार्थः । अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येवेदमपि सिद्धं वशा इयं वशेयमित्युक्तं तद्दुक्तेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणे ऽपि नित्याप्लुतवद्भाव इष्टः । प्रत्याख्याने नित्याप्लुतवद्भावस्य येननाप्राप्तिन्यायेन वैकल्पिकतद्बाधनाभावाशङ्काबाधकत्वात् । उपस्थितइत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेयमिति कैयटस्य प्रमादः । मूलं तु इति शब्दभिन्ने वैदिकेतिशब्दे नेत्येव परतया कथं चिन्त्याख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमादाय यत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागितीयमिति निर्देशः । विशेषणेन तदन्तविधिमाश्रित्याह । ईदूदेदन्तमिति । द्विवचनमिति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । तदन्तमिति व्याख्याने फलमाह पचेते इति । निपात एका० ॥ निपात इति किम । चकारात्र । प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात । एकाजिति कर्मधारयोऽत्र तत्पदार्थप्रधानत्वेनान्तरङ्गत्वाद्बहुव्रीहिरिति प्रग इत्यादिनिर्देशाच्च । तेन प्रेदमित्यादौ न दोषस्तदाहैको ऽजिति । आदृग्रहं इति पर्युदासस्यौचित्यात् । अत एवैकाज्ञाङिति नासूत्रि । वा संदेहवाचकस्य आशब्दस्य आङा सहाव्ययीभावे आ आत् आमित्यादौ सत्यभिधाने स्वत आदिभक्त्वेन पूर्वान्तवत्त्वेन निपातत्वे ऽपि प्रगृह्यत्वञ्च । पूर्वान्तवत्त्वेनाव्त्वातिदेशे ऽतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्याभावसिद्धत्वात् । ओदिति सूत्रे आ उ ओ इत्यत्रानाङिति प्रतिषिद्धाया ऽयमारम्भ इति भाष्यं तु पर्युदासे ऽपि गम्यस्य प्रतिषेधस्य सत्त्वाच्चानुपपन्नम् । अनाङिति पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम् । स्याङ्गसमुदाये स्याङ्गत्वाभाववदच्समुदाये ऽच्त्वाभावादेकाज्त्वाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थं तेन धिप्सतीत्यादिसिद्धिरिति भाष्ये स्पष्टम् । जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थस्तेन तितउशब्दैकदेशस्याऽउइत्यास्यानुकरणे अउ अकरोदित्यत्रानुकरणे वाऽनिनोति निपातत्वे ऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोध्यम् । ननु ङकारस्य क्वाप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह । वाक्यस्मरणयोरिति । वाक्यशब्देन स्वार्थगतमनभिमतत्वम् । स्मरणं विस्मृतस्य स्मृतिविषयता । एवं किल तदिति स्मृतार्थनिर्देशः । निपात इत्यनुवृत्तमोदित्यनेन विशेष्यतइत्याह । ओदन्त इति । निपातसंज्ञा चादिपदोपस्थितचादीनां सति संभवे ऽर्थवतामेवेति सार्थकनिपा-

तानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति गोभवदित्यादौ च्व्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षे ऽपि च्व्यन्ता निपाता इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वादत एवानर्थके ऽपि निपाते सा सञ्ज्ञा सिद्ध्यति । चपा इतीत्यादौ प्रगृह्यत्वायाह । सम्बुद्धिनिमित्तक इति । संबुद्धिपर इतिव्याख्याने तु सालुकालुप्तत्वेन तत्परत्वाभावान्न स्यात् । न लुमतेति निषेधानित्यत्वं त्वगतिकगतिः । इतावित्ति किम् । पटो ऽत्र । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् । संहितायां विवक्षायामप्यवादिरहितप्रयोगार्थमिदं तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्धमात्राकालव्यवायेनोच्चारणेच्छा च तदविवक्षेति बोध्यम् । उञः ॥ अत्रार्षनिपात एव उञ ऊँ इत्येकसूत्रत्वे तु शाकल्यग्रहणाननुवृत्तौ ऊँ इतीत्येकमेव स्यात् । प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात् । उ इति वितीति च न स्यात् । आदेशे प्रगृह्यत्वकार्यं तु स्थानिवद्भावेन बोध्यम् । प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततयात्र विधेयविशेषणत्वे मानाभावात् । शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँआदेशस्य विकल्पे ऊँ इति वितीति सिद्ध्यति न तु उ इतीति प्रगृह्यत्वविकल्पेन पक्षे तदभावे ऽपि अस्य तात्पर्यात् । एतदभावे निपात एकाजित्यस्याप्रवृत्तेः । तदुक्तं भाष्ये योगविभागं प्रदर्श्य किमर्थो योगविभागः । शाकल्यमते ऊँ विभाषा यथा स्यात् । ऊँ इति उ इति । अन्येषामाचार्याणां मतेन वितीति । अनेन हि योगविभागस्य उ इति इति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते, एतौ योगविभागेन व्याचष्टे । उञ इति । उञ वाचकं प्रगृह्यपदमित्यर्थः । शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते तदाह । उञ इतौ वेत्यादि । विकल्पाननुवृत्तौ हि निपात एकाजित्येव सिद्धे इदं व्यर्थमेव स्यादेवञ्च प्राप्तविभाषेयम् । ऊँ इत्यत्र शाकल्यप्रगृह्यपदयोरसंबन्धे उञ इत्यर्थाधिकारादप्रगृह्यस्यैवादेशे तस्यैकार्यणोति यणि कृ इतीत्यस्यासिद्धिः । दीर्घोच्चारणवैयर्थ्यापत्तिश्च । विकल्पमात्रसबन्धे ऽपि ऊँ इतीत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसंबन्धः प्रगृह्यपदमात्रसंबन्धे ऽर्थाधिकारादप्रगृह्यस्य नित्यं ऊँ आदेशे ऊँ इतीति प्रगृह्यस्य उइतीति सिद्धे ऽपि वितीति न सिद्ध्येत् तदाह । उञ इतौ दीर्घो ऽनुनासिक इत्यादि । अत्र विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति तथारूपप्रयोगएव प्रवृत्तिः स्यादिति वाच्यम् । योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात् । वस्तुत उञनु-

वादेन सञ्ज्ञादेशयोः सहविधानमेव न्याय्यमादेशे स्थानिवद्भावात्प्रगृह्यकार्यं भाष्ये प्रगृह्यसञ्ज्ञकश्चेत्यपि स्थानिवद्भावलभ्यार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु । मय उञो ॥ व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वाच्च प्लुतप्रगृह्या इत्यनेन बाधः । नानुस्वार इति । किंवित्यादौ प्रगृह्यसञ्ज्ञाभावे ऽस्यासिद्धत्वादिको यणीति यणि अनुस्वारो भवत्येव । ननु यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन गौरीशब्दस्य सप्तम्यर्थवाचित्वे ऽपीकारस्य तत्त्वाभावो ऽत आह । ईदूदन्तमिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तं च धर्मीति भावः । मामकी तनू इति । प्रगृह्येष्वेतिशब्दप्रयोगस्य पदकारैर्नियमितत्वात्पदपाठे प्रगृह्यत्वफलमत्र बोध्यम् । ईदूतौ किम् । अग्ना भवति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् । धीती, मती । ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः । अर्थग्रहणं किमिति । न च तदभावे ईदूदेदिति वदीदूदन्ता या सप्तमीत्यर्थापत्तिः । तथा च यर्षीत्यादावेव स्यात्, एकादेशस्य परादिवद्भावेन सप्तमीत्वात्, न तु गौरी ऽधिश्रितेति तत्सिद्ध्यर्थं तदावश्यकमिति वाच्यम् । ईदूतौ सप्तमी प्रगृह्यं, अदसः, एकद्विवचनमित्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेतया वैजात्यबोधनादूकारादौ ऽसम्भवाच्च सञ्ज्ञाविधावपीति तदन्तग्रहणनिषेधाप्रवृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थनेष्टसिद्धिरिति प्रश्नः । यर्षीत्यादेरनभिधानमेवेति परे । वृत्तावपीति । अर्थग्रहणसामर्थ्यात्सप्तम्यर्थम् च पर्यवसन्नमित्यर्थनात्र तत्समष्ट्याधेयार्थे ऽपि वृत्तेर्न दोषः । सञ्ज्ञायामिति समासअजहत्स्वार्थायां वृत्तौ पूर्वपदस्यानर्थक्ये ऽपि सुप्सुपेति समासे अजहत्स्वार्थाया प्रसक्तदोषस्याकरणेनैव वारणमिति भावः । गौरी अधिश्रित इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति गौर्यधिकरणके लक्षणाया मानाभाव इति न तत्र दोषः । वाप्यामश्व इति । सुप्सुपेति समासः । सञ्ज्ञायामिति च । ननु सञ्ज्ञायामिति समासे वाक्येन सञ्ज्ञानवगमान्नित्यसमासत्वेन विग्रहो ऽनुचित इति चेत् । तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वे ऽपि नित्यसमासत्वाभावात् । विभाषाधिकारबाधे मानाभावात् । नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव, अत्र तु पृथक्प्रयोगे ऽपि तद्बोध्यविशिष्टार्थाप्रतीतिमात्रमित्याहुः । अणो ऽप्र ॥ अण इति किम् । कर्तृ हर्तृ । अत्राणपूर्वेणैव व्याख्यानात् । आगच्छतमग्नी इत्यादौ प्लुतस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात् जाते प्रगृह्यत्वे पश्चात्प्लुते सत्यपि अनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानिवत्त्वन्तु न, प्लुतस्यान्य-

लत्वृत्तिधर्मत्वेनाल्विधित्वात् । पूर्वसवर्णे कृते द्विवचनत्वन्तु परादिवद्भावेन । तेन तादृरूप्यातिदेशे ऽप्येतद्धर्मातिदेशाङ्गीकारात् । अत एव रामाविन्त्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितमन्तादिवदित्यत्र भाष्ये इति स्पष्टमाकरे । अरमन्नित्यादीति । सिद्धमनच्त्वादिति वार्त्तिकप्रयोगेण अल्पाच्तरमिति सौत्रप्रयोगेण कथमनच्त्वमिति भाष्यप्रयोगेण च वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सन्विधानेन श्चुत्वस्य चाभावो बोध्यत इति केचित् ॥ इति स्वरसन्धिः ॥

स्तोः श्चुना श्चुः ॥ सीति शीति च लुप्तविभक्तिकं भिन्नं पदं । योगइति । संयोगइति तदर्थं । तेन चित्तमित्यादौ न दोषः । अत्र पदस्येत्यधिकृतमपि न संबध्यते । शादिति ज्ञापकात् । तेन याच्ञा सिद्धा । शात्परस्य स्तोः श्चुत्वनिषेधकात् शादिति लिङ्गादेव निमित्तकार्यिणोर्यथासंख्यं न । एवमुत्तरसूत्रे ऽपि तोः षीति ज्ञापकाच्च तत् । शकारचवर्गौ स्त इति । यथासंख्यमिति शेषः । हरिश्शेतइति । श्चा शरीति विसर्गाभावे शः । मज्ज्विति । चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चत्वं मतं बोध्यम् । तयोश्चानित्वन्तु वैचित्र्यार्थः । विश्न इति । यजयाचयतविच्छप्रच्छरक्षो नङिति नङ् क्ङिति गादेशे ङित्त्वाद्गुणाभाव । प्रश्ने चासन्नकालइति निर्देशात्संप्रसारणाभावः । न पदान्ताट्टोरनाम् ॥ पदाट्टोरित्येव सिद्धे ऽन्तग्रहणं स्पष्टार्थम् । टोः किमिति । षकारस्यापि पदान्ते जश्त्वविधानात्स्मरणः । ह्रस्वात्तादाविति षत्वस्यासिद्धत्वाज्जश्त्वाभाव इत्युत्तरम् । षण्णवतिरिति । षडधिका नवतिरिति विग्रहः । षण् णगरं इति पृथक्पदे । यरो ॥ पदान्तस्येति किम् । वेद्धि । बध्नाति । स्पर्शे चरितार्थं इति । उपलक्षणमिदं यलयोरपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्तिपक्षे ऽपि तादृशव्यक्तेः चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव तत्र नेति बोध्यम् । स्पष्टञ्चेदमेकां यणोचोन्यत्र कैयटे । परे तु स्यानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतदुक्तेरसंभव एव न । तस्मादनुस्वारस्येति सूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णो ऽनुनासिको भवतीत्यर्थान्न दोषः तदुक्तं भाष्ये, रेफे ऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो न वक्तव्यो रेफोष्मणां सवर्णा न सन्तीति । चिन्मयमिति । स्वार्थिकस्तत्प्रकृतवचने इति मयट् । तत्र नदीति वा वाक्यभेदेन कृत्स्यानुपदप्रकृतवचनाभावे ऽपि मयडेवमत एव चिन्मयं ब्रह्मेति सामानाधिकरण्यम् । चिन्मात्रमिति क्वचित्को ऽपपाठः । मात्रचः प्रत्ययस्यात्राप्रसक्त्यभावात् । मयूरव्यंसकादिष्वेवमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादिगणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यतइति मतेनेदम् । उदः स्था ॥ तस्मादित्युत्तरस्येति परिभाषालभ्यमर्थमाह । उदः परयोरिति ।

अत्राघोषस्येति । समनियतत्वेनान्यतमग्रहणे बाधकाभावेन श्वासविवारयो-
स्त्यागे ऽपि न क्षतिरिति बोध्यम् । पस्यासिद्धत्वादिति । त्रिपाद्यां परत्वा-
दिति भावः । झलां यमामिति सूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु पस्यासि-
द्धत्वाभावेन चर्त्वं भवत्येवात एवोत्पूर्वस्कन्दे रोगे उपसंख्यानम् उत्कन्दो रोग
इति भाष्यं सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति परे । न चेदं सूत्रं व्यर्थं
झलो झलीत्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम् । झलादौ प्रत्यये
तेन लोप इत्यर्थस्यानेन ज्ञापनात् । उदस्थादित्यत्र, न निर्दिश्यमानपरिभा-
षया निर्दिश्यमानादेरेव स्थानित्वाच्च दोषः । झय इति पञ्चमीत्याह ।
झयः परस्येति पूर्वस्येत्यनुवर्त्तते । घोषवत इति । समनियतत्व ऽपि विनिगम-
नाविरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम । झय इति । पदान्तादित्यपि
बोध्यम । तेन विरप्शमित्यादौ छत्वं न । जकारे कृते इति छत्वमिति शेषः ।
पूर्वोक्तभाष्यसंमताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् । मोनु ॥ पद-
स्येत्यधिकृत म इत्यनेन विशेष्यत इत्याह मान्तस्येति । हलि सर्वेषामित्यतो
हलीत्यनुवर्त्तते । हलि किम् । राममागय । नश्चा ॥ चेन मो ऽनुकृष्यते ।
अपदान्तस्य किम् । राजन्याहि यशांसीति । यशस्शब्दे जस् शौ नपुंसक-
स्येति नुमि सान्तेति दीर्घः । आक्रंस्यत इति । क्रमेर्लृट् आङ उद्गमन इति तङ्
स्यः । अनुस्वारस्य ॥ ययीति लुप्तषष्ठीकं पृथक्पदम् । अत एवादः स्यत्यादौ
सवर्णग्रहणानुवृत्तिर्वा ऽनुनासिके इत्यत्र तदपकर्षश्च सिद्धः । ययीति
स्य ग्रहणम । दशनामित्यादौ तु न दोषः । शकारसवर्णाप्रसिद्धेः । प्रयत्नभेदेना-
झलः साधर्म्याभावात् । अचि अनुस्वाराभावात् मो राजि ॥ नेति सिद्धे
म इत्युक्तेः मपर इत्यतद्विषये प्रशाम् स्वलय इत्यादौ मो नो धातोरिति
नत्वबाधनार्थो निषेधस्तवनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितञ्चेदमेतदो
ऽनमो मंशमि सूत्रेभाष्ये । हे मपरे ॥ मपरे इति बहुव्रीहिः । न तु तत्पु-
रुषो ऽसंभवात् । मो नुस्वार इत्यतो म इत्यनुवर्त्तते । यथासंख्य ॥ सम्यक्
ख्यानं संख्या क्रमविशिष्टेन ज्ञानम् । यत्स्थानेभ्यः प्राप्यते स्थानिमित्यत्र संख्याश-
ब्दस्य ज्ञानार्थतया दृष्टत्वात् तमनतिक्रम्य यथासंख्यं अनुदेशः पश्चादु-
च्चाक्यार्थबोधकालिकः सम्बन्धः साम्यं संख्यया योगपत्वाद्व्याख्यानाच्च ।
एवञ्च समसंख्यानां सम्बन्धो येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा तेनैव
क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः, फलितमाह । समस
म्बन्धीति । यद्यपि स्थानाख्यलौकिकप्रमाणादेव सिद्धं तथापि परस्मैपदा
नुमित्रा ऽप्रयाप्यत्र इत्यादौ गच्छत, सचान्तरस्य क्रममादाय संबन्धबोधार्थ-
मावश्यकम् टकितादित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमत्व

न्वयबोधनार्थञ्चेदं एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्यकल्पनेतत्प्रामाण्यात्ततश्च बोध इति बोध्यम् । अत्र स्वरितेनेत्यपकृष्यतइति स्यत्यादिष्वादौ नातिप्रसङ्गः । तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति ञमङ्णनमिति सूत्रे भाष्ये स्पष्टम् । एते यवला निरनुनासिका एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् जातिपक्षप्राप्तस्यैव गुणाभेदकत्वप्राप्तस्यापि अप्रत्यय इत्यनेन निषेधाच्च । एवं मय उञ इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः । अन्यथा तद्वानासामित्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः । चयो द्वितीया इति । नादिन्याक्रोशइत्यत्र भाष्ये इदं एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् । ऊष्मादयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजामिति प्रातिशाख्ये ऽपदान्तभाजामिति चर्त्वासिद्धत्वलभ्यार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चर्त्वं विना चयो ऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरसिद्धत्वात् । अप्सरा वप्सा इति भाष्योदाहृते छान्दसत्वाज्जश्त्वस्यासिद्धत्वं नैवञ्च प्रातिशाख्ये ऽपदान्तभाजमित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं न त्वप्पूर्वात् सर्त्तेरसिवदेः सावित्यत्र विस्तरः । हः सि । सीति सप्तमी षष्ठ्यर्थे व्याख्यानात् तदाह सस्येति । पदस्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । षट् सन्त इति । धुटि धस्य चर्त्वे तस्याभेदात्पुनर्ढस्य चर्त्वम् । नश्च ॥ नकारान्तादिति । पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यतइति भावः । वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः । तस्य पदान्तस्येति । अपदान्तनकारे ऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । चतुष्टयमिति । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वं कृत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारककारशकारघटितरूपद्वयाधिक्ये ञशानुस्वारविसर्गाणान्तु त्वविकल्पनाधिक्ये ऽपि न क्षतिः । ङमो ॥ पदस्येत्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यत इत्याह । तदन्तं यत्पदं तस्मादिति । तत्र ङमश्च ह्रस्वादिति विशेषणसंबन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमी बलाद्यतीति सप्तमी षष्ठ्यर्थे तदाह । अच इति । सप्तमीनिर्देशास्तु लाघवार्थः । ङम उत्तरस्याच इति तस्मिन्निति सूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् । आनितीत्यादौ ङमुण्मा भूदिति । भाष्ये तु विभक्त्यप्रत्ययकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवोक्तम् । दण्डिनेत्यत्र ङमुडभावो मण्डूकप्लुत्या अचि च पदे इत्यतः पदे इत्यनुवर्त्त्यानादेः पदस्य ङमुडित्यर्थेन बोध्यः । पदस्येत्यस्या[illegible]त्या संबन्धे ऽपि विशेषणविशेष्ययोरुभयोः सत्त्वप्रत्यन्तत्वाच्च तदादि

त्रिपदीवृत्त्या तदलाभः स्यात् । एतदर्थमेवाचीति सप्तमीनिर्देशः । ङमन्तं यत्पदमित्यर्थः । परमदण्डिनेत्यादौ तद्वारणाय पद इत्यनुवृत्तिरावश्यकी वान्तर्वर्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात् । उत्तरपदत्वे चेति प्रत्ययलक्षण-निषेधस्तु न । मापकुम्भवापेनेत्यादौ पदव्यवायेऽपीति निषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । तेन निषेधेन सिद्धमित्येतत्सूत्रस्य-भाष्योक्तस्वैकदेशन इति दिक् । इको यणचीति सौत्रो निर्देश । रुप्रकरण-इति । अत एव समः सुटीत्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम् । रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र रो. पूर्वस्मादित्यपि । अय-मधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः । न तु मतुवसोरित्यत्र तत्सूत्रस्य वार्त्तिकयोश्च । अत्रेति तु रुप्रकरण एवास्य संबन्धो न त्वग्रे ढो ढे लोप इत्यादावित्यर्थसूचनार्थं स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वानुनासिक इति विशेषद्योतनार्थः । रोः पूर्वस्येत्यस्य च रुस्थानिनः पूर्वस्येत्यर्थो बोध्यः । अनुनासिकात्पर इत्यत्राननुनासिकादिति ल्यब्लोपे पञ्चमी व्याख्यानात् । अयमागमोऽनवयव एवावयवत्वे मानाभावात् । खरीति । विसर्गोत्पत्त्याप्यवसानस्य न संबन्धो व्याख्यानात् । सा वक्तव्य इति । समः सुटीत्यादिसूत्रत्रये स इत्युपसंख्याय समः सुटीत्यत्र सकारं प्रश्लिष्य रुतः सकार एव विधेय इत्यर्थः । एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तन्निर्द्धीनामप्राप्तिरेवेति भावः । स्पष्टं चेदं भाष्ये । विस-र्गस्थानेन सत्वविधाने तु गौरवं स्फुटम् । लोपस्यापीति । यत्तु 'उपधारञ्जनकु-र्याद्वा रुकारो मति । लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्' । उप-धारञ्जनमनुनासिकानुस्वारागमरूपम् । नमानेकारमकारयोः । प्रकृतिभावो-दाहरणं नृन्पाहीति । तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः । अत एव भाष्ये समादिषु सत्वं वक्तव्यमित्युक्तम् । रुत्वपक्षे चानुनासिकाद्याप-त्तिर्बाधकत्वेन नोक्ता । ननु लोपपक्ष एव द्वित्वेन द्विसकारस्य सिद्धत्वात्समः सुटीति व्यर्थमित्यत आह त्रिसकारकमपीति । स्कोरिति लोपस्तु नास्यासिद्धत्वात् । पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, लक्ष्ये लक्षणस्येति न्यायात् । एतेन समः सुटीत्यत्र वेति पाठेनैव पक्षे सोऽनुस्वारेण सिद्धेऽनुनासिका-त्पर इति व्यर्थमित्यपास्तम् । ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चा-रणे विशेषाभावोऽत आह । अनुनासिकवतामिति । तत्रोच्चारणे विशेषाभाव-कल्पने इदं वचनं व्यर्थमेव स्यादिति भावः । हयवरट्सूत्रभाष्योक्तशर्षपम-स्थाने फलमाह । अनुस्वारवतामिति । अपिना कस्य सङ्ग्रहः । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह । वचनान्तरेणेति । यथा मय इत्यनेन । एकस्यैव शास्त्रस्य

पुनः प्रवृत्तौ हि स न्याय इति भावः । पूर्वत्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यत इति त्रितयस्य निर्वाहो बोध्यः । अनचि चेत्यत्र यणो मय इत्यस्योपसंख्यानाद्वचो रहाभ्यामित्यतस्तस्य परत्वं बोध्यम् । पुमः खय् ॥ अम्पर इति बहुव्रीहिः । ≍कःपयोरिति । कुप्वोरिति सूत्रविधेययोरित्यर्थः । इदुपधस्येति सूत्रे ऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तेरिति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । पत्वेति । इदमननुनासिकपक्षे । अनुस्वारपक्षे न कुप्वोरित्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनेदुपधत्वाभावात् । पुंसोरसिति । तद्धातोरुपधाया इत्त्वे ऽप्रत्यये तोरसिति भावः । नश्छव्य ॥ अप्रशानिति षष्ठ्यर्थे प्रथमा । नॄन्पे ॥ नॄनिति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वात् । तत्र कानित्यत्रापि । चाद्विसर्ग इति । शर्परे इति सूत्रात्तदनुकर्षणं नेति भावः । येन नेति । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति न्यायेनेत्यर्थः । येन नेत्यादेरुत्सर्गस्याप्राप्तावित्यर्थः । नन्वेतस्य प्रकृतार्थेऽबाधकत्वात् । प्राप्ते तु न भवेत् कस्मात्प्राप्तेरेव विषय इत्यादिनोक्तं हि बाधकत्वबीजम् । तदुक्तं शर्पूर्वा इति सूत्रे भाष्ये शर्परा इत्यनन्तरोत्पादितः शर्परस्य बाधकम् । इदन्तावदत्र प्रष्टव्यः, यदि तत्राप्यन्यत् किमिह स्यात् कलादि शर्परे चाप्राप्ते तस्मिन्नारभ्यमाणमिदं तत्र बाधकं भविष्यति न त्वत्र । द्वितीयस्याप्यत्र भाष्ये ऽपि स्फुटमेतत् । न तु शर्पर इति । न चास्य विसर्गस्य ≍कःपौ स्यातां किं चास्यैव तौ स्यातां, स्थानिवद्भावेऽपि विसर्गस्य तु तत्स्थानिकत्वात्सत्त्वमेव स्यादिति वाच्यम् । शर्परे इति सूत्रे कुप्वोरित्यत्रानुवृत्त्या शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात्स्पष्टं चेदं भाष्ये । वार्त्तिके कानग्रहणं शक्यमकर्तुमित्याह । यद्वेति । तत्र समग्रग्रहणमपि त्यक्तुं शक्यम् । पुमग्रहणं त्वावश्यकमेव । अननुनासिकपक्षे इणः परत्वेन पत्वापत्तेः । गव्याम इति । गणे कृतसत्वपत्वानामेव पाठादिति भावः । ≍कःपयोरपवाद इति । तद्विहितविसर्गस्यापीत्यपि बोध्यम् । कां स्कानिति वीप्साया द्वित्वम् । संहितायाम् ॥ संहिता च स्वरासि अर्धमात्राकालव्यवायेनोच्चारणम् । ततो ऽधिकार्धमात्राकालेनोच्चारणे अवसाने तदधिकारोक्तकार्यव्यावृत्तये इदं, तदधिककालव्यवाये तु न साधुत्वं नापि बोध इष्यते इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः । छे च ॥ छे इत्याकार उच्चारणार्थस्तेनाच्छत्रमित्यत्र तुक् ह्रस्वस्य पितीत्यतो ह्रस्वस्येति तुगिति च वर्त्तते । नश्छ्वनेति । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः । एवं नञ्पूर्वाच्छादय-

नेदं ह्यच्छब्द इति पदान्तत्वं बोध्यम् । स्पष्टञ्चेदममरटिप्पणे । आङ्मा ॥ आङ्माङ्ग्रहणादव्ययस्यैव । दीर्घस्यायमिति । वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः । एओङ्सूत्रभाष्ये ध्वनितमेतत् । चेच्छिद्यत इति । तुक्‌ । हल्ङ्यादिः शेषस्तु नाभ्यामसञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा मातात्रा मांहतानां हलामेव तेन निवृत्तेः । अत एव नुगत इत्यादि चरितार्थम् । दीर्घात्पदान्ताद्वेति । पदान्तस्य दीर्घस्येत्यर्थः । योगविभागोऽनर्थक्यादिति सूत्रे भाष्ये स्पष्टः । दीर्घान्तस्य पदस्येत्यर्थेन सिद्धे ऽन्तग्रहणं पदान्तविधित्वमस्य न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थं तेनामामसामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः ॥ इति हल्सन्धिः ॥

विसर्जनीयस्य सः ॥ प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम् । शर्परे इति बहुव्रीहिः । विशेष्य चावद्यविधिमतोः साजात्याद्विसर्जनीयादिति पक्षः स्वरेव । विसर्गस्य विसर्गविधौ फलमाह । न त्वन्यदिति । अन्यदेव विशृणोति । इहेति । वृक्षण्यामिति । विकल्पद्वयसामर्थ्यादिति भावः । वा शरि ॥ अपदान्ताश्रयादिति सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं व्याख्यानात् तेनोपपयस्काम्यतीत्यादौ सत्वसिद्धिरिति स्पष्टमव्ययीभावश्चेत्यत्र भाष्ये । गीः काम्यतीति । वाः कम्यतीत्यस्याप्युपलक्षणमिदम् । इणः षः ॥ इदुदुपधस्येत्यस्यासिद्धत्वात्सर्पिष्याशमित्यादौ सत्त्वानिवृत्त्यर्थं द्व्याशब्दात्कल्पमित्याद्यर्थञ्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्य इति च सम्बध्यते । तेनाग्नेः कल्पं द्वौ पश्य गीः काम्यतीत्यादौ षत्वं न । अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिणः उत्तरस्य विसर्गस्यानिकसस्येति षत्वमिति भाष्योक्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्यानिकन्तुरुत्वा पुंस्यु इत्यादौ न दोषः । तत्र हि सस्यानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः । अनव्ययस्येत्यादि त्वत्र षत्वे ऽत्र न सम्बध्यते तेन द्विष्कृत दुष्काम्यतीत्यादौ षत्वसिद्धिः । गीः काम्यतीत्यादौ सकाराभावादेव न दोषः । अपदादाविति च न सम्बध्यते तेन दुष्करोतीति षत्वसिद्धिः । परन्त्वयं षत्वेऽसङ्गतः । उत्तरसूत्रस्यासिद्धत्वेन निष्कृतमित्यादौ षत्वासिद्धेः । प्रकरणे प्रकरणमसिद्धं न योगे योग इति पक्षस्तु नास्त्येव ज्ञापकासम्भवादित्युपसर्गादसमासेऽपीत्यत्र निरूपयिष्यामः । विसर्जनीयस्येव षत्वमिति । मूलोक्तपक्षे तु सकारषकारयोः स्थानित्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः । नमस्पु ॥ इह उत्तरपदादाविति न सम्बध्यते व्याख्यानात् । मातात्प्रभृतित्वादिति । कपादित्वाद्गतित्वं स्वरादिपठितस्य तु गतित्वाभावस्तेन मातात्प्रभृतिषु व्यर्थवचने ऽपि न गतिरित्यन्ये । इदुदु ॥ अप्रत्ययस्येति पर्युदासो लाघवात् ।

तत्र प्रत्ययपदं तत्संबन्धिपरं तेन प्रत्ययसंबन्धिभिन्नस्येत्यर्थो ऽत एव सर्पिर्भिः कृतमित्यादौ न षत्वं स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः । एकादेशशास्त्रेति । एकादेशशास्त्रमपवादरूपस्यानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रानिमित्तकत्व बोध्यम् । स्पष्टञ्चेदमत्र सूत्रे उरण् रपर इति सूत्रे च भाष्य इत्यन्यत्र विस्तरः । प्रत्ययभिन्नसम्बन्धिन इति तु नार्थः । अग्निः करोतीत्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः । तपरकरणं किम् । गोः करोति । उपधाग्रहणं व्यर्थम् । उपधाग्रहणं न करिष्यते इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति हयवरट्सूत्रभाष्योक्तेः । तिरसो ऽन्य ॥ अत्र गतिग्रहणं नानुवर्तते परामते तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् । द्विस्त्रि ॥ कृत्वो ऽर्थ इति न विसर्गविशेषणं चतुःशब्दे ऽसम्भवात् किं तु द्विरादीनामित्याह । वर्त्तमानानामिषामिति । इसुसोरिति सूत्रवत्प्रयोगीत्या सुच इति सूत्रयितुमुचितम् । सुजन्तान्तस्य पदस्य ग्रहणात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः । चतुःशब्दो ऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासाभावात् । अत एव चतुष्ट्वाद्यनिर्देशाः सङ्गच्छन्ते । चतुष्पञ्चाशदित्यत्रापि षत्वं भवत्येव । न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठे भाविनोपधात्वासम्भवात्तस्यानिर्दिष्टमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात् । अत एव समः सुटीति सूत्रभाष्ये सम्पुंकानामित्यनेन कांस्त्रिधत्वादिष्वाशङ्क्य पुंस्कामेत्यत्र षत्वापादनं सङ्गच्छते न च कृत्वार्थ इत्यत्र कृत्वार्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थाच्च पञ्चकृत्वः करोतीत्यादौ दोषो नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति ग्रहणमिति वाच्यम् । कृत्वो ऽर्थ इत्यस्यासिद्धत्वेन चतुःशब्दे इदुदुपधस्येति नित्यषत्वापत्तेः प्रकरणे प्रकरणमसिद्धमिति पदस्पृदसमासे ऽपीति सूत्रे कैयटे पूर्वपदादिति सूत्रभाष्ये च दूषित एव । उपसर्गादिति सूत्रे चोपपादयिष्यते । किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणे ऽव्यवहितप्रकरणं तत्र त्रिपाद्यसिद्धत्वं स्याच्च सर्वाम प्राप्नुयाम् । किं चास्याधिकारत्वात्स्थानिसम्बन्धपर्यन्ता प्रतियोगसिद्धत्व दुर्वारमित्यन्यत्र विस्तरः । इसुसोः ॥ अत्र सुसः प्रातिपदिकावयवयोर्ग्रहणमिति पाठः । तेन पञ्च काष्ठः सख्यु पाके इत्यादौ षत्वं न । नित्यं समासे इति सूत्रोदाहरणविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात्सामर्थ्याच्च इसुसन्तपदावयवविसर्गस्येत्यर्थः । पदस्येत्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ षत्वानापत्तिरव्ययस्यसुसन्तत्वे ऽपि उत्तरपदस्य चेति निषेधेनापदत्वादिति वाच्यम् । अनुत्तरपदस्थस्येति निषेधेन क्व चिदुपार्थिवग

व्यमन्त्वेऽपि शब्दरूपविशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपविशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतयेसुसन्तान्तस्येत्यर्थलाभात्। अत एव धनोश्चेत्यादौ न दोषः। ब्राह्मणस्य सर्पिष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं तस्यैकार्थीभावसामर्थ्यविषयत्वात्। अधात्वभिहितं समानाधिकरणमसमर्थवदित्युक्तेः सर्पिःकालकमित्यादौ न षत्वम्। अधात्वभिहितमित्युक्तेः सर्पिष्यीयतइत्यत्र षत्वसिद्धिः। धातुसहचरितप्रत्ययाभिहितत्वेन समानाधिकरणमसमर्थवन्नेति तदर्थः। यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति आयनेयीनीति सूत्रे भाष्ये स्पष्टमुक्तेः। तत्र हि गत्व इत्यादावादेशानां शङ्खाणादीनां प्रतिषेधो वक्तव्यः। प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमित्युक्तम्, अयामन्ताल्वाय्येत्न्विष्णुष्विति सूत्रे पाणिनेर्व्युत्पत्तिपक्षस्यापि स्वीकार इत्यस्य गमकं व्याकरणान्तरीयमेव वा तत्सूत्रं, सर्वनामस्थानेऽसीति महासञ्ज्ञावत्। अत एव भाष्ये व्युत्पन्नानीत्येवोक्तम्। न त्वनेकार्था अपि धातव इति वद्व्युत्पन्नानीत्यप्युक्तं, तदा इदुदुपधस्येति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्पः सिद्धः। नित्यं समासे इति सूत्रमनुत्तरपदस्थस्येति प्रतिषेधार्थं नित्यग्रहणं तु न कर्तव्यमेव। समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः। सर्पिष्ट्वादौ षत्वं त्वत्र षते क्व विद्यत इत्यर्थकाद्बहुलग्रहणादिति स्पष्टं भाष्ये। व्यपेतेति। व्याख्यानादिति। एकार्थीभावसामर्थ्यग्रहणे परमसर्पिःकुण्डिकेत्यादौ समासे विकल्पापत्तिः। अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह। कस्कादिष्विति। एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम्। व्यपेताविति द्विःपीति। आनय सर्पिः कुण्डिका तिष्ठतीत्यादौ। व्यपेतायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्र। प्रत्ययाभक्तविसर्गस्येत्यर्थमिदुदुपधस्येत्यत्र व्याचक्षाणानां व्यवस्थादर्शनात् सति ऽव्यपेतायां तेन सिद्धिरिति भावः। एतेन कस्कादिपाठस्याव्यपेतायां चारितार्थ्येन व्यपेतायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम्। प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेतायां विकल्प एवेति बोध्यम्। अतः कृ॥ कृग्रहणेन तदादिग्रहणं समासादिष्वोत्तरपदस्य विशेष्यत्वात्। विभाषाकर्मकयोरिति सूत्रे अप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात्। अयस्कुम्भीत्यादौ लिङ्गविशिष्टपरिभाषया सत्त्वं बोध्यम्। भास्कर इति। तपरकरणादतः कृ इत्यस्याप्राप्तिः॥ इति विसर्गसन्धिः॥

यत्तु स्वौजसित्यत्र रुत्व पाठः । सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति तन्न । यशोभिरित्यादौ रोरसिद्धत्वादुत्वानापत्तेरतो रोरित्यस्य प्रथमैकवचने चारितार्थ्यात्तद्ग्रहणं चाह । स्वौजसेति । पदस्येत्यनुवृत्तं सप्तसुभ्यां विशेष्यते तेन तदन्तविधिरादेशस्त्वलोऽन्त्यस्येत्यन्त्यस्य तत्फलितमाह । पदान्तस्येत्यादिना । सजूरित्यत्र व्यपदेशिवद्भावेन सिद्धिः । व्यपदेशिवद्भावो ऽप्रातिपदिकेन ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति परिभाषाद्वयं प्रत्ययविधिविषयमित्यसमासे निष्कादिभ्य इत्यत्र भाष्ये स्पष्टम् । इदञ्जश्त्वापवादः । श्रेयानित्यादौ त्वस्यासिद्धत्वात्संयोगान्तलोपः सर्वत्रेति दिक् । षत्वस्यापवाद इति यद्यपि न स्यात्तर्हि षत्वं प्राप्नोतीत्यतावता । कृते त्वस्मिन् षत्वस्यासिद्धत्वादनुगुणायत्वाप्राप्तिरेवेति भावः । प्रथमयोः ॥ व्याख्यानात्प्रथमयोरित्यनेन प्रथमाद्वितीययोरूपमुपविभक्त्योर्ग्रहणं तदाह । प्रथमाद्वितीययोरिति । पूर्वग्रहणं किम् । अग्नी इत्यत्र पत्ते परसवर्णो मा भूदिति । दीर्घग्रहणं तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणं न स्पष्टार्थम् । पूर्वस्यादीर्घत्वात्पूर्वसजातीय इत्यर्थेनैवेष्टसिद्धेरिति स्पष्टं भाष्ये । आद्गुण इति । तौ सदिति निर्देशेन प्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः । देवदत्तहन्तृहतन्यायस्य तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि न ज्जीवनं देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनं प्रकृते तु न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य तस्य प्रवृत्तिः, किं तु हननाद्यसजातीय सर्वाङ्कमात्र प्रसक्तस्य निषेधे बाधकस्याज्जीवने न बाधकमिति स्पष्टं चेदं स्यादित्यादिसूत्रे कैयटे । सुश्रात इति । सुश्रातस् शब्दः कस्य चित्संज्ञा सम्बुद्धौ दूरादूते चेति प्लुतः । तत्सामर्थ्यादिति । प्रतियोगित्वेन तदाक्षेपणसामर्थ्यादित्यर्थः । आश्रयादिसिद्धं इति भाष्योक्तेः । पत्यष्टाति यथा द्रष्टातीत्यर्थे आगच्छ हे पयो३ट आगच्छ पयो३इत्यादावेकपदस्य वर्णद्वयमापेक्षमन्ताद्भयस्य प्रति वाक्यसंपादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतादिरन्यथा प्लुतस्यात्यदृश्या सिद्धत्वात्परत्वात्प्लुते आश्च ऽप्लुतपरत्वाभावादुत्वं ऽप्लुतात्परत्वाभावादुत्वं न स्यात् परिभाषादृश्या बहिरङ्गासिद्धत्वे ऽपि न क्षतिः । स्वदृष्ट्या ऽसिद्धस्यापि पूर्वं प्रत्यसिद्धत्वप्रतिपादनसम्भवात् स्वदृष्ट्या ऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनात् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे इव के प्रत्यसिद्धत्वं प्रतिपाद्येत तत्राङ्ग वाक्यस्य टेरित्यट् शब्दाकारः प्लुतो ऽन्त्य रेफटकारसंयोगपरत्वेनाकारस्य गुरुत्वात् गुरोरिति प्लुतः । आश्रयेण

तु येन नाप्राप्तिन्यायेन प्रत्ययत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्नाता इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् प्लुतोऽन्तरङ्गो भिन्नवाक्यस्याकारमापेक्षत्वाद्रुत्वं बहिरङ्गमिति स्पष्टं भाष्ये । उकारानुबन्धेति । उकारेत्संज्ञकरेफस्येत्यर्थ इति भावस्तेन देव रुहीत्यादौ न दोषः । भो भगो ॥ रोः सुपीत्यतो रोरिति वर्त्तते न तु रोरीत्यतो र इति प्रातरत्रेत्यादावतिप्रसङ्गात् । चशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह । एतत्पूर्वस्येति । नन्वेवं पूर्वरूपापत्तिरत आह, असन्धिरिति । भगोअघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इदं प्राचामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिर्न्याय्य एवेति बोध्यम् । न ह्ययमपि । इदमर्वाचामनुसारेण । भाष्ये तु रेफस्य विसर्गस्थानित्वेन तद्वृत्तित्वाश्रयमपीदमसिद्धमिति । स्थान्यन्तर्वृत्तिधर्माश्रयत्वात् । अयहोदित्यत्र च दीर्घे लोपे नेटत्वेनैव निवेश इति विशेषोऽतः पयःस्वित्यादौ दोषः । तत्र हि रोः सुपीति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाच्यवृत्त्यर्थकार्यमादाय तु निषेधकानीति तत्रापि रो रेफस्य विसर्ग इत्यर्थे त्वगयहणं व्यर्थमित्युक्तम् । नन्वेवं हे रामित्यादौ संबुद्ध्यवयवस्य हल सस्य लोपे तद्वृत्तिसुप्त्वस्याधर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न । आनुमानिकादेशस्य रामित्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणापदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वातिदेशात् । अत्र दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्यासुपीति रत्वनिषेधस्यादेशे दीर्घाहन्शब्देऽतिदेशेन प्रवृत्त्या न रेफ इति दिक् । नवा रोरिति । इदञ्च निपातानाम्याय विभाषा भवद्रिति वार्त्तिके प्रत्याख्यातस्य वृत्तिकृतो मतेन, परे तु तेषामपि रोरित्यर्थः । लोपना विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकनिष्पन्नसङ्ग्रहः । एषामन्त्यस्य रुः स्यादवस्य चौकारः । संबुद्धाविति तदर्थः । अवग्रहणसामर्थ्याद्दलोन्त्यस्येति नेति बोध्यम् । वार्त्तिकनिष्पन्नानान्त्वयाणां भोशब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः । व्योर्लघु ॥ यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं तथापि लोपो व्योरिति लोपवारणाय सौत्रत्वमाश्रयणीयं स्यादतो व्योरित्युक्तम् । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसंबन्धात्तरं वर्त्तिपदार्थप्रकर्षविवक्षया साधुः । प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनकत्वमेव । लघूच्चारणाविति । लघुतरोच्चारणावित्यर्थः । सूत्रे सौत्रत्वादेकवचनम् । यकारोदाहरणमसाधादित्य इति वृत्तिः । ओतो ॥

व्योरित्यत्र यकारसाहचर्याद्वकारोपि धात्ववयव एवात्राप्यर्थाधिकारात्तथैव तेन स्मृता वच्युतेत्यादौ न दोषस्तदाह । यस्येति । तादृशवस्यासंभवादिति भावः । भोभगो इति तु नानुवर्त्तते विच्छेदात्तद् ध्वनयन्नाहत्यति । पदान्तस्य किं तोगमिति । इदं लघुप्रयत्नयोर्न गार्ग्यश्रुतेस्तदाह, अलघुप्रयत्नस्येति । पूजार्थमिति । व्याख्यानादिति भावः । तादृशश्च भोभगादिपूर्वक एवेत्याशयेनाह । भो अच्युतेति । भाष्यानुसारिणस्तु भो इत्याद्यनुवृत्तेः स्मृतोविन्यादौ न दोषः । तस्याऽनभिधानाच्च । अपूर्वस्येति त्वोत इत्यनेन विरोधाच्च सवध्यते । लोपः शाकल्यस्येत्येव भो भगो इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः । उञि च ॥ भोइत्यादिपूर्वस्य पूर्वेण सिद्धे राह, अवर्णपूर्वयोरिति । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रत्ययस्यैव लोपः । एतेन भो इत्यादि पूर्वं लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणान्त्वसाव एकाग्निरिति वृत्तिः । उत्तरार्थमिति । ङमो ह्रस्वादचीत्यर्थमित्यर्थः । एतत्त्वेव निरूपितम् । हलि सर्वेषामित्यादौ तु न संबध्यते । व्यवहिते ङम इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव लिट्त्सु इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थान्न स्युः । अत एव माभ्यामित्यादौ हलि सर्वेषामिति लोपसिद्धिरिति दिक् । हलिम ॥ भो भगो इत्याद्यनुवर्त्तते तत्राकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य त्वोत इत्येव सिद्धं अपूर्वं तूभयोरपि । न चापूर्वलघुप्रयत्ने अस्यासिद्धत्वाल्लोपः शाकल्यस्येति प्राप्नोतीति वाच्यम् । लघुप्रयत्नस्यैवानेन लोपे व्योरिति सूत्रे ऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्यात् । व्योरित्यर्थाधिकारादिति वाच्यम् । ऋषिमात्रग्रहणार्थस्य सर्वेषामित्यस्य वैयर्थ्यापत्तेः । विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः । अत्र च यकार एवानुवर्त्तते न वकारो वृत्तौ तथैवोक्तेः फलाभावाद् व्यपरे इत्यादिनिर्देशाच्च । अन्यथा तत्र सौत्रत्वादाश्रयणीयं स्यात्तदाह । लघ्वलघूच्चारणस्येति । न तु सुपीति । पर्युदासे हि सुप्सदृशेन प्रत्ययेनैव स्यादेवस्यावभातीत्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात् । दीर्घाद्दी निदाघेत्यत्रापि स्यात् । सुबन्तइति अर्थस्तु न । उत्तमैकाभ्यामित्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभावज्ञापनात् । लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणतायाः एवाश्रयणाच्च । अत एव रदाभ्यां निष्ठेत्यादौ न दोषः । अहरह इति । नित्यवीप्सयोरिति द्वित्वम् । न लुमतेति निषेधात्सुप्परत्वाभावः । गतमहो रात्रिरिति । केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्योदाहरणात् नलोपः प्रातिपदिकान्तस्येति सूत्रे न हि रूपरात्ररथन्तरेषु

रौ रेफ इति विशेषो ऽस्तीत्यत्र प्रायेण रात्रेति पाठाच्चेदृशानामनभिधानमेवेत्याहुः। अनन्त्यत्वादिति । रात्रिशब्दान्तात् समासादचि समासान्ते यस्येति चेति लोपे ऽपि रात्रिशब्दत्वानपायादिति भावः । अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह । विसर्गापवाद इति । ढ्रलोपे ॥ नायन्तत्पुरुषो ऽनीर्यादि चक्षरित्यादौ च दोषापत्तेर्नापि बहुव्रीहिर्व्यधिकरणत्वादतो णिजन्तात्कर्मण्युपपदसमास इत्याह । ढरेफावित्यादि । भाष्ये तु व्यधिकरणबहुव्रीहिरेव दर्शितः । न चाजघा इत्यादौ मिपि धातो रिति रुत्वस्य लीढ इत्यादौ ढत्वादीनां पित् राज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम् । ढग्रहणेन लघूत्र ऽजघा इति भाष्योदाहरणेन च तत्तच्छास्त्रेऽवाक्यतापन्नपूर्वत्रासिद्धमिति सूत्रस्यपूर्वग्रहणेनैतत्सूत्रापहरणबोधनात् । अणः किमिति । अच इत्येव सिद्धमिति प्रश्नः । तृंह इति पाठे नकारजावनुस्वारपरसवर्णाविति तृन्हाकारान्निर्दितामिति नलोपे तृढ इति रूपम् । अत्राणूर्वणेव व्याख्यानात् । विप्रतिषेधे॥ विप्रतिपूर्वात्कर्मव्यतिहारे वर्त्तमानात्सिधतेर्घञि परस्परविरोधार्थो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयान्तरङ्गस्य ज्ञापकादिना ऽपवादस्य वचनप्रामाण्याद्बाधकत्वे स्थिते तद्भिन्नो ऽस्य विषय इत्याह । तुल्यबलेति । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपत्संभविस्वकार्यसमर्पणास्त्व सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृते ऽसंभवपतस्य प्रवृत्तः । यथा वृत्तेभ्य इति । तत्र हि दीर्घत्वयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः । क्वचित्कैरनासंभवे ऽपि यथा शिष्टादित्यादौ । तत्र हि तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्यव तत । तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव न तु तत्प्रवृत्तिकाले इति युगपदसंभवो ऽस्त्येव न परत्वात्तातङि सकृद्गतिन्यायेन न शादेशः । स्पष्टश्चेदं सर्वं प्रकृत सूत्र इको गुणवृद्धी अदसामादित्यादावाकरे । तत्र युगपदुभयोः कार्ययोरसंभवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम् । परमेवेति । तेन तिसृणामित्यत्र यौगपद्यासंभवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्त्वेन चयादेशे पुनः स्थानिवत्त्वेन चयादेशो न । तत्पक्षे सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । यद्वा यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तत्रोभयोर्न करोति यौगपद्यासंभवात्तथा शास्त्रयोर्लक्ष्ये प्रेष्ययोः क्वचिल्लक्ष्ये यौगपद्यासंभवादप्रतिपत्तौ प्राप्तायामिदं परं भवतीति विज्ञेयं तच कृते यदि पूर्वस्यापि निमित्तमस्ति तदा तदपि भवत्येव तत्पक्षे पुनः प्रसङ्गविज्ञानात्सिद्धमिति । यथा भिन्धीत्यत्र परत्वात्तातङि पुनर्धिर्भवति ।

मणिन्यायेन तन्त्रेणोभयत्रान्वयः । तेन स इत्यस्यापि समानवाक्यस्थेन विद्यमानपूर्वत्व बोध्यम् । सामन्त्रितम् ॥ संबोधने चेत्यतः संबोधने इति वर्त्तते । सेत्यनेन प्रथमा परामृश्यते । आमन्त्रणमामन्त्रितमिति महासंज्ञाबलात्तदन्तविधिरित्याह । तदन्तमिति । अत एव हे हे भो इत्यादीनामपि संज्ञासिद्धिः । अन्यथान्तरङ्गानपीति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन तत्वनिमित्त इत्यत्रेव समासवदत्र संज्ञा न स्यात् । यद्यप्येषां संबोधने शक्तिः प्रातिपदिकार्थमात्रेणैव प्रथमा तथापि संबोधविषयप्रथमासत्त्वान्न दोषः । एतदर्थमेव प्रथमेत्यनुवर्त्तमाने सेति पदम् । अन्ये तु संबोधने चेत्यस्य तत्र वर्त्तमानादित्यर्थे अन्यत्रेवात्रापि संबोधने चेत्येव प्रथमा प्रातिपदिकोक्तत्वस्याव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात् । तिङ्कृत्तद्धितसमासैरिति परिगणनाच्च । सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः । अविद्यमानवदिति । गोतोणिदितिवत्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थमित्तेनाम्भो देवदत्तेत्यादावाम एकान्तरमामन्त्रितमनन्तिके इति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये । न चात्र नामन्त्रिते समानाधिकरणे इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम् । अस्य संबोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाभावात् । देवदत्तस्यैव विशेष्यत्वाच्च ॥ इडेति । अग्ने तव देवास्मानि यज्ञादृशा, अग्ने नयेत्यत्र तिङ्ङतिङ इति निघाते अग्ने इन्द्रेत्यत्रामन्त्रितस्य नेति निघात इति विवेकः । अत्र पूर्वमित्यनेन परस्मान्निपात् पूर्वं परस्य कार्ये इविद्यमानवदित्यर्थस्तेन देवास्मानित्यत्र देवेत्यस्यामन्त्रितान्तद्वत्त्वे भवत्येव । पूर्वं किम् । पाहि देवात्रामन्त्रितनिघातो भवत्येव । प्राचीनास्तु एवमेव तत्संपत्तेरिड्ग्रहणं स्पष्टार्थमित्याहुः । नृसिंहाश्रम तस्याग्नेरित्यादौ, येन केन विनोतो बासमित्यादाविव विभक्त्यन्तप्रतिरूपकनिपाता[illegible] दोषः । अथ समाधिः प्रकृतेऽपि । न इत्यस्य विभक्तिप्रतिरूपकत्वात् । अन्यार्थं तु एतत्कल्पनावश्यकत्वमित्याह । एवमिति । सर्वथा निघात इति । अस्य प्राप्त इति शेषस्तत्र यसुनेऽसरस्वतीत्यनयोर्बाधकाभावाद्भवति शुनद्धीत्यस्य तु न पादादिस्थत्वात् । एतेनादिभ्यः सर्वेषामिति बहुवचनसमञ्जसमित्यपास्तम् । अग्ने तेजस्विन्निति । अनुदात्तं सर्वमित्यनयोः सप्तम्यन्तकत्वेन निवृत्त्या तस्माद्वचयेणापद्यादावित्यस्याप्यविद्यमानवत्त्वं निर्वाहयतीति भावः । आमन्त्रिते किम् । देव करोषि । सामान्यवचनं किम् । अहृये देवि सरस्वति इडे काव्ये इत्यादौ पर्यायेषु परेषु निषेधो मा भूत् सामानाधिकरण्यस्यैकार्थविशेष्यकबोधजनकत्वमेव न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ॥ सुपादिति । शोभनौ पादावस्येति बहुव्रीहिः । सङ्ख्यासुपूर्वस्येत्यकारलोपः

समासान्तः अञ्चेः सुपीति निपातनैः साहचर्यादिति भावः । अनिदिताम् ॥ इत्संज्ञेकारवद्धातूनामित्यर्थः । अङ्गस्येत्यधिकारः । अञ्चतेर्भस्येति । अल्लोपोन इतिषष्ठ्यस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यञ्चयतौ पूर्वाकारे न प्रवृत्तिः । अच इत्यञ्चतेर्लुप्तनस्य ग्रहणं व्याख्यानात् । भस्य किम् । प्रत्यञ्चौ । लुप्तनस्येति किम् । पूजायां प्रत्यञ्चा । चौ ॥ नेदं अंगग्रहणं व्याख्यानात् । तदाह लुप्तेत्यादि । अण इति । कर्त्तृत्व इत्यादीनामनभिधानमिति भावः । गवञ्चाणग्रहणमुत्तरत्र सम्प्रसारणस्येत्यत्र तृतीय इत्येतन्त्रानुवृत्त्यर्थमावश्यकमिहापि सन्ततो न त्वत्रास्य व्यावर्त्यमस्ति इत्याकारे स्पष्टम् । अञ्चेति । तत्परिभाषाभावे तु चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य इति वचनमेव भाष्योक्तं शरणम् । विष्वग्दे ॥ चादावप्रनाम्न इत्यतः सर्वनाम्न इत्याकृष्यते । सामर्थ्यादुपसर्जने प्रवृत्तिः । अप्रत्यये इति पाठे ऽविद्यमानः प्रत्ययः क्विबादिर्यस्येत्यर्थः । वप्रत्यय इति पाठेऽप्रकारस्याविवक्षितत्वात्स एवार्थः । अद्र्यादेशस्यैवशावन्तोदात्तो निपातनादिति स्पष्टं भाष्ये । अदसो ॥ असोरिगोकार उच्चारणार्थः । अदस इत्यवयवषष्ठी सग्रहणं तत्स्थानिकोकारादेरप्युपलक्षणत्वेनादस्यति अदद्र्याद्र इत्यादौ न दोषः । दादिति किम् । अमुयोरित्यत्रान्त्यस्य मा भूदिति । समाहारद्वन्द्व इति । इतरथात्वामनुरोधेन । वस्तुतो ऽयुक्तमेतत् । उमक्रम इति द्वन्द्वे सुनोऽपि घ्यन्तत्व हृस्वस्य पूर्वनिपातनपुंसकहृस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्या ऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च हृस्वत्वे तत सवर्णदीर्घे इति रूपासिद्धेरन सर्वाकाल इत्यत्र काल इति न कृतत्वस्यादिव उत स्मृत उ इति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोध्यम् । ष्यङः सम्प्रसारणमिति सूत्रे भाष्ये ऽनन्त्यविकारेऽन्त्यसदेशस्येति परिभाषापठितान्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकार इति लिङ्ग तामर्थतः पठति । अन्त्यबाध इति । अन्त्यस्य बाधे कार्याप्राप्तावर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा गौन इत्यादि नेतित्यादाविव स्यादेव नमतीत्यादाविवेति भाष्ये स्पष्टम् । अल्लोपोनोऽत्र सान्तेत्यादावनेकाक्षिकल्पनापेक्षयेयं व्याख्या । किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् । परत्वेन पदसंज्ञाबाधकत्वानुपपत्तेः । राज्ञ इत्यादौ नलोपस्यासिद्धत्वात्प्रथममल्लोपोन इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगाच्चलोपापत्तेश्च । तस्मादाकडारस्यसंज्ञानं यथोद्देशपक्षमेवावश्यकमिति यत्रादिस्थादिपरिभाषानित्यत्वस्य न तत्र लाभः । ष्यङः सम्प्रसारणमिति सूत्रस्य कार्यकाल सञ्ज्ञापरिभाषं भवन्त्युप-

ष्यतमिदं भवति । यत्तु भसिमिति तत्र यजादिपरतया ऽनङ्कारं विशेषयिष्यामः अनाकारमिति भाष्यं त्वेकदेश्युक्तिः । यजादिप्रत्ययस्याङ्गाक्षेप इत्यनाकाङ्क्षतया तेनाऽनो विशेषणायोगाच्च । अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि तस्मात्त्वास्यैतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्येति उपसंहृतं भाष्ये इति भावः । अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः तत्त्वञ्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवति चर्लीकृष्यत इत्यादौ ऋकारान्तर्गतरेफस्योत्तरार्धभागेन व्यवधानाद्वान्त्यसदेशसंभव इति न तत्रैतत्परिभाषाप्रवृत्तिरत एव न संप्रसारणमित्युदाहरणीभूतस्य विट्ठ इत्यादेर्नानयासिद्धिः । अत एव न सम्प्रसारणमिति सूत्रं सार्थकम् । नैतस्याः परिभाषायाः प्रयोजनानीति तत्सूत्रस्थभाष्यस्य त्वयमर्थः । एतत्सूत्रमाश्रित्य विट्ठ इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति अन्त्यसदेशत्वाभावादिति च तद्भावः ॥ परस्यैवेति । इशब्दस्यैवेत्यर्थः । अः सेरिति । अत्र अकारेण आकारस्यापि ग्रहणात्तेनासदृशीत्यादिसिद्धिः । तत्राऽसमर्थनाम इति पूर्वपदान्तस्यात्वम् । त्यदाद्यत्वेति । त्यदादीनामत्वविषय इत्यर्थः । पत्त इति । अत्र तन्त्रेणाऽर्थद्वयोपि सूचनात्पर्यन्तत्र तत्त्वानुरोधात्तृयस्या अत्र प्रमाणमुपन्यस्यति । उक्तञ्चेति । तत्त्ववादिति । चर्लीकृष्यते इत्यत्र यथा तत्त्व रीगृकारयोर्भवति तथेत्यर्थः । अत्रादमुयाङिति रूपवादिमत न्याय्यतमम् । तत्त्व उक्तरीत्यतथ्यायाप्रवृत्तावपि अत्र तदप्रवृत्तौ मानाभावात् । अत एव भाष्ये ऽदसोऽनोर्सेरिति वार्त्तिकप्रत्याख्यानावसरे ऽसेरिति पक्षमुक्त्वा यदोऽमुमुयाङिति न सिध्यति । अदद्र्याङिति प्राप्नोति अदमुयङिति भवितव्यम् अनन्त्यविकार इति उक्तम् । अन्तेति प्राप्नोतीत्युक्त्या च तत्रासमर्थनिरुक्ता इति भवितव्यमित्यनेन पृथक् मुत्वमिति पक्षमस्त्यभावो दर्शित । इति भवितव्यमित्युक्त्या च तत्र शब्दे ऽप्रयुक्तत्व सूचितमित्याहुः । विष्वग्देवयो क्रिमिति । चस्याप्युपलक्षणमिदम् । ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यादावप्रवृत्तौ व्यर्थमप्रत्ययग्रहणमत आह । अप्रत्ययेति । तेनेति । अन्यथातः कृ इत्यत्र नित्य समास इत्युक्तानुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तावयस्कादिष्वादाविव स्यादिति भावः । उद ईत् ॥ अचोऽत्र इत्यनुवर्त्तते । समः सि ॥ समो सिद्धमिति सम इतीति वा न कृतम् । परिभाषाज्ञानकृतगौरवापत्तेः । तिरसस्ति ॥ अलोपइत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते । अस्य अलोपो लोपाभावो वास्मिन्वत्स्वतौ वेत्यर्थस्तदाह । अनुपाकारेति । तिरश्चेति । श्चुत्वे ऽलोपस्य स्थानिवत्त्वेन पूर्वत्रासिद्धीये तन्निषेधात् । पूजार्थस्येति । पूजारूपार्थस्य गम्यत्वे इत्यर्थः । अत एवाश्यासूत्रं गच्छतीत्यर्थेऽश्वतं गच्छ

तीत्यादौ नलोपो न । अव्याकुलगमनेन च पूजा गम्यते न त्वञ्चतेरेव सोऽर्थ इति स्पष्टमञ्चेरनपादाने इति सूत्रे भाष्यकैयटयोः । प्राच इत्यादि चिरन्तनादिरूढस्येति बोध्यम् । एतेनाञ्चेर्गतावेवेति नियमेनैव सिद्धौ नाञ्चेः पूजायामिति व्यर्थमित्यपास्तम् । नलोपाभाव इति । उपधात्वबोधनद्वारेत्यर्थः । स्पष्टञ्चेदं परेश्च घेति सूत्रे भाष्ये । अपिना च समवधाने चोः कुरिति कुत्वाभावो निरुपपदात्क्विनि च निपात्यत इति बोध्यम् । सङ्गीति वचनाद्वा कुत्वाभावः । षत्व स्कोरितीति । सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते षत्वम् । व्रश्चेः क्विपि ग्रहिज्येति सम्प्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । सुवृट्त्स्विति । षत्वस्यासिद्धत्वाड्डः सीति वा धुट् । निपात्यन्त इति । क्विन्प्रत्ययान्ता इति शेषः । तत्र धृषेर्द्वित्वं गुणाभावश्च गमेर्जगादेशश्च सृजेः कर्मणि प्रत्ययश्च निपातनात् । शतृवदिति । प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । शतुरनुम इति सूत्रे बृहन्महतोरुपसंख्यानमिति तु पृषद्वाक्यानुकृतये नियमार्थमिति बोध्यम् । अत्वसन्त ॥ अत्विति अतु इति लुप्तषष्ठीकं पृथक् पदम् अधातोरित्यसन्तस्यैव विशेषणमन्तशब्दात्तदाह । धातुभिन्नेति । अत एवोगिदचामिति सूत्रे गोमन्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते । अङ्गविशेषणतया ऽर्थसिद्धतदन्तविधेरेवानुवृत्त्युत्तरमन्तग्रहणम् । परमिति । वचनसामर्थ्यादुपधापदसम्बन्धेन चरितार्थ्यादित्यभिमानः । अयमप्यन्वय इत्याह । नित्यमिति । कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः । धीमानिति । न चैकानुबन्धकपरिभाषया मतुपो ऽत्राग्रहणं सूत्रन्तु सर्वादिपाठेन ऽनुनासिकोकारविशिष्टभवतुशब्दे चरितार्थमिति वाच्यम् । पकारादेः समुदायानुबन्धत्वे ऽप्येतावद्व्यनुबन्धकत्वाभावात् । अवयवानां नान्तरीयकतया समुदायोपदेशेनैव अर्पितत्वादित्यर्थस्यादेव उपदेश इति सूत्रस्थभाष्यसम्मतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धकतया एव स्वाकारात् । न चोकारलोपे ऽत्वन्तत्वस्याप्यभावः । उकारस्याश्रयणेन तद्देशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणे ऽनुबन्धमेतत्वात्वन्तमित्यपास्तम् । तदाश्रयणाभावात् । तस्मादनुनासिकोकारविशिष्टो य उपदेशे ऽत् तदन्तस्य प्रयोगस्य दीर्घ इति सूत्रार्थ इति न दोषः । नियमार्थमिति । धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः । तेनाध्वसत् ब्राह्मणीत्यादौ नुम्ङीपौ न । न्यायप्राप्तान्लोपाकरणपूर्वकं नलोपकरणस्य विधेयार्थत्वमित्याशयः । यद्यप्यञ्चतेरेव नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमः ।

युक्त इति वाच्यम् । नन्वत्र धातुत्वात्कथं नुमत आह धातोरिति । न चौपदेशिकधातुविषयक एव नियमोऽस्तु किमनेनेति वाच्यम् । औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात्तत्फलं पर्णध्वदित्यादावेव णोमा नित्यादि नामधातावुगितश्चेति ङीब्भाव इति दिक् । क्यच्पक्षे ऽल्लोपो न स्थानिवत् क्वौ लुप्तत्वात् । अत्राचारक्विबर्वाचीनमतेन । वस्तुतो हलन्तेभ्यस्तदभाव इति ह्रस्वनद्याप इत्यत्र भाष्ये स्पष्टम् । उभे अभ्य ॥ तन्न्यायानुसारेण गर्गशतदण्डनन्यायादत्र समुदाये वाक्यसमाप्तिरित्याह । उभे समुदिते इति । इ इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । यत्तूभेग्रहणं सामर्थ्यात्सहभावापन्नतेनाद्वित्वविशिष्टार्थकत्वेन समुदिते इत्यर्थलाभ इति तन्न । अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतापहसितत्वाच्च । ध्वनितञ्चेदमेतदर्थमिति प्रयोजने उभे ग्रहणं सहार्थं विज्ञास्यते इति ग्रन्थेन भाष्ये । अत एव सूत्रेऽपि भाष्ये गर्गशतदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य सहग्रहणं कर्त्तव्यमिति वार्त्तिकं प्रत्याख्यातन्तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभे ग्रहणमपि प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र त्र्यादिशब्दानामेकापाये ऽप्रवृत्तेरभ्यस्तत्वाद्दाविभ्यामलोपे कार्यकालपक्षे न सत्तेति न जुस् । एकादेशात्पूर्वमाद्यन्तवदुपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेऽपि सर्वे सर्वपदादेशा इति न्यायेन स्थानिवद्भावात् भित्त्वेन जुसापत्तिः । किं चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन प्रकृत्या चापवादविषयमिति न्यायेन पूर्वमन्तिभावाप्रवृत्त्या एकादेशे जुसापत्तिः । यद्यादृशे पूर्वं समुदाये प्रवृत्तसंज्ञायाः स्थानिवद्भावेनाभ्यस्तलोपे सत्यपि पञ्चमीसमासैकादेशस्य स्थानिवत्त्वात् तत्प्रवृत्तिरत एव प्रत्यपिपर्तीत्यादौ न दोष इत्यलम् । नाभ्यस्ता ॥ बहुयोगव्यवच्छेदार्थाऽपि नुमित्यनुवर्त्तनं सामर्थ्यात्तदाहरन्नीति । इयः शतरि शपः श्लौ श्लाविति द्वित्वे ऽभ्यासह्रस्वत्वे श्नाभ्यस्तयोरित्यालोपे इददिति । न्यद्रादिषु ॥ आनात्तत्तामसज्ञानमात्रम् । आम ॥ इदुगवनुवृत्त्येति सूत्रमनुवर्तते । पत्वापवादत्वादिति । कः क्रियत इति न्यासेन दृष्ट इत्युदाहरेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थांशे बोध्यागर्भबहुव्रीहिणा लब्धत्वादृशादिक्विन्नन्तविषयं तद्गणसचरितार्थमिति भावः । स्वकार इति । अघोषमहाप्राणतुल्यत्वादिति भावः । कैयटेति । क्विन्प्रत्ययस्येति सूत्रस्येत्यादिः । अभिमतत्वादिति । यद्यपि जश्त्वापवादोऽपि कुत्वं तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापीति भावः । वस्तुत इदं चिन्त्यं प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः । तस्माद्धृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चुषु अस्य चारितार्थ्येन जश्त्वसत्वापवादता न युक्तेति तन्मतदर्शि

स्यानमित्याहुः । साहचर्यादिति । न च सहत्यतेः क्विपि सहतोपि धातुत्वसंभव इति वाच्यम् । औपदेशिकधातुत्वासंभवेन तत्साहचर्येणोपदेशिकधातुभिन्नमान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिन्निति नान्तलक्षणादीर्घस्तु संयोगान्तलोपस्यासिद्धत्वाच्च । हिमीत्यस्येदित्वाद्नितामिति लोपो न । ध्वदिति । स्रंसु ध्वंसु अवस्रंसने क्विप् । अनिदित्वान्नलोपः । वस्विति दत्वम् । विवक्षितनइति । भाष्ये अमुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादित्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः विवक्षितसप्तम्यामपि विभक्तिनिमित्तकत्वेन बहिरङ्गत्वाभावात् पूर्वं परमपुमानित्यादौ स्वरप्रवृत्तौ दोषात् । बहुपुंसीति । विभक्तौ लिङ्गविशिष्टाग्रहणाच्चामुङ् । विभक्तिविवक्षाया लिङ्गकार्यात्प्रागेव सत्त्वेन न ङीपः प्रागमुङिति भावः । पुत्र इति । पातेरिति पाठान्तरम् । स्त्रियामिति सूत्रे भाष्ये तु सूतेः सस्य पः ह्रस्वः मुक् प्रत्ययइत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्संज्ञावश्यकत्वादियमुक्तिर्निष्फला । पुमानिति । सान्तेति दीर्घः । उशनेति । वशः कनसि शाहज्यति सम्प्रसारणम् । अस्य सम्बुद्धाविति । एतच्च वृत्तौ वार्तिकपठितं वशधातौ माधवस्तु "सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्" इति श्लोकवार्तिकमित्याह । भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रमाणिकाः । उशना शुक्रः अनेहा कालः । नत्रि हन एहनेत्यसनहन एहादेशश्च । सुत्र इति । अधातोरित्यस्य धात्ववयवभिन्नावयवमन्तस्येत्यर्थ इति भावः अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् । अदसश्चौ ॥ अदस इति षष्ठी । तदोः स इत्यतः सावित्रि वर्तते । औत्वं सुलोपत्वापवादः । न नु सावेदो दत्यवाप्तु इति चेन्न असावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे सावित्यमिद्धुः । असुक इति । असुक इत्यादौ त्वज्ञुत्यन्तादः शब्दपर्यायो ऽमुकशब्द इत्याहुः । एत इत् ॥ बहुवचनशब्दो यौगिक इत्याह । बहूयीति । तनामो इति सिद्धम् । पश्चादुत्वेति । उत्वेत्युपलक्षणमीत्वस्यापि । नन्नु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह । नमुने इति । कर्त्तव्ये कृते चेति । एवञ्च न इति विषयसप्तमीति भावः । भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोप्यासिद्ध इति व्याख्यानम् । सु इति समाहारद्वन्द्वः कृते चेत्युक्तमेत्वं सुपि चेति दीर्घो न । अमीभिरिति । नेदमदसोरित्यस्य ॥ इति हलन्ताः पुल्लिङ्गाः ॥

नहो धः ॥ झलो झलीति पदस्येति स्कोरित्यतोऽन्त इति चानुवर्तते झलि परे पदान्ते विद्यमानस्येत्यर्थः । झलान्तस्येत्येतल्लभ्य हस्येति उपपूर्वो णहबन्धनइत्यतः क्विप् । नहिवृतीति पूर्वपदस्य दीर्घः । सोऽहंस्त्यादिलोपे धत्वजश्त्वचर्त्वादि । दलोपयत्व इति । पूर्वपदान्तस्य लोपो धातोः सस्य

षत्वम् । आदेशप्रत्यययोरिति तु न षत्वं पदादावादिरिति पक्षे सात्पदाद्यो-
रिति निषेधात् । हस्य घ इति कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन
बाधादिति भावः । उष्णिगसिद्धवदिति निर्देशात्कुत्वस्य जश्त्वेनासिद्धत्व स्वरोन्या
तु टडगका इति बोध्यम् । द्योरिति । दिव औदित्यौत्वं यण् । चतस्र
इति । परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनरामिति स्थानि-
वत्सूत्रे भाष्ये । चतसृणामिति । नोपधाया इति दीर्घनिषेधः । सर्वाशब्दवदि
त्यर्थः । अत एव सर्वनाम्नो वृत्तिमात्र इति न पुंवत्त्वम् । शब्दपरस्य कदा-
पि सर्वनामत्वाभावादिति भावः । य. सौ ॥ पुंस्यपाठाभावात् क्लीबे सानुका
नोपाधिस्त्रियामिदम् ॥ वागिति । वचेः क्विब्वचीत्यादिना क्विप् दीर्घोऽ-
सम्प्रसारणञ्च । अपोभि ॥ अत्र उपसर्गात् इत्यनुवर्तते । आश्रित न प्रत्यया
ख्यानात् । दिगिति । दिश अतिसर्जने क्विप् । षडगकाः प्राग्वत् । त्विषग-
ताषस्मात् क्विप् जशत्वचर्त्वे । जुषीप्रीतोऽस्येत क्विप् । सजस्य सभावे सजूः । आप
भिरिति । अदन्तत्वाभावाद्दत्वाभावेनेन इंदित्यस्याभाव सत्वमेव ॥ इति हल
न्ताः स्त्रीलिङ्गाः ॥

दत्वमिति । अपसर्गाश्चत्वस्य पदाधिकारस्थत्वात्तदन्तेऽपि दत्वमप्रमा
दत्वादावपि । पञ्चपदस्थेति । प्रत्ययलक्षणेति भावः । अत एव राजपु
पादौ नलोपादिसिद्धिः । उत्तरपदत्वे नेति । उत्तरशब्देनोत्तरपद लक्ष्यते उत्तरप
दशब्दश्च समासचरमावयवे रूढः । तेन तस्य पदत्वे तत्प्रयुक्तकार्यं कर्तुं
लुमता लुप्ते प्रत्ययलक्षणं न पदादिविधौ त्वस्य निषेधो बुध्यते । तेन परम-
वाचेत्यादौ न कुत्व दीर्घसर्वनामेत्यादि । सात्पदाद्योरिति षत्वनिषेधश्च । निष्क-
पपदादेव विधि षष्ठीसमासो द्विज सापपदादित्वा इत्यभिप्रायमिति कैयटः । मन्त्र
यते क्रियावचनस्य । पदादिविधिश्च प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव । तेन
परमसुधावित्यादौ षत्वाभावो न । उत्तरपदादिः कर्णाग्रणीतमानित्यादौ
तत्तरपदशब्दस्य समासचरमावयवमात्रे रूढत्वे दोषः । अयञ्च निषेध उत्तरप
दस्य कार्यत्व एवेति इमुडमत्र उक्तम् । बहुत्यनेक बहुवाचो बहुसर्वावित्यादा-
वपि न दोषः । बहुत्वस्य च पदादिविधावेव प्रत्ययलक्षणमिति वचनात्त्वगात
पञ्चवार्तिकमपि उत्तरपदत्वे च पदादिविधावित्येव पठनम् । एतत्प्रत्याख्यान-
प्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं प्रत्याख्यानात्तर पुनर्वचनपाठते
तद्वचनपाठेनापि न स निर्वचनः । उत्तरपदशब्देन सर्वसमपदत्वानाक्रान्तोत्तरप
दस्य ग्रहणं व्याख्यानात् । तेन पञ्चदण्डिप्रिय इत्यादावन्त्यत्वात्प्रत्ययोत्तरप
देऽपि नलोपादिसिद्धिः । कादेशनेति । इदम्शब्दे य. साविति च नत्वापि
बोध्यम् । वक्तव्य इति । द्वितीयाटौस्स्विति अत्र संबध्यते । अयञ्च सामर्थ्या

न्तकालेऽपि भवति । एनादेशोऽपि एनदित्यादिसिद्ध्यर्थं वक्तव्यः येननाप्राप्तिन्यायेनैतदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेरत एव भाष्ये नपुंसकैकवचने एनद्वक्तव्यः कुण्डमानय प्रक्षालयैनदित्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्या ऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमज्ञानेन एकदेशिना यच्चैनदित्यादिरुक्तिर्यद्गर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फलाभावाच्चात्रोत्तरमुक्तं सिद्धान्तौ तु किमुच्यते नपुंसकैकवचन इति सर्वत्र एनदेव वक्तव्य इत्येवंशब्दैः प्रत्याख्यानं कृतम् । अनयोरप्यादेशयोरेतदस्त्यतसोरन्यतरसाहचर्येणोपसर्जने न प्रवृत्तिः त्यदाद्यत्वेन सिद्धमिति भाष्यासङ्गतिश्च । एनतमादायेनादेशप्रत्याख्यानपरं यच्चेनोत्क्रयन इत्यादि भाष्ये त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्योते निरूपितम् । अन्वादेशविषयेदमेतदोः समासस्यानभिधानमेव । यच्चैनोत्क्रयते एनो न वक्तव्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धं यच्चैवमेतच्छ्रितको न सिद्ध्यति । एतच्छ्रितक इति प्राप्नोति । यथालक्षणमप्रयुक्त इति भाष्यात् । वृत्रहणौ इति । न संयोगादिति निषेधादल्लोपो न । रोऽसुप्यहर्भातीति । अहर्भातीति कृत्वे ऽहो भातीति स्यादिति भावः । नलोपे प्राप्त इति । न च नलोपे ऽकारस्य रो रुवोर्विशेषाभावेनान्यतरेणैवोपपत्तावुभयोर्विधानसामर्थ्यादेव लोपो नेति वाच्यम् । संबुद्धौ नलोपनिषेधेनाहर्गणेत्यादावुत्वाभावेन दीर्घाहो निदाघेत्यादावुत्वमपवादेनेन चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलभ्येन नकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ संबुद्धौ प्रवृत्त्या स्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः । चावर्त्स्येति । आवृत्तौ मानं न रूपरात्रीति वार्त्तिकमेवान्यथा नलोपे ऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । अत्रस्य पदान्ते ऽहोनेति निपात्यत इत्यर्थः । इदमसम्भवादपवादत्वमिति वार्त्तिकमते ऽहोन्यस्य नलोपात्तरस्यचारितार्थ्याभिमानेन । वस्तुतः सत्यपि संभवे बाधनं भवतीति भाष्यसिद्धान्तात् रुत्वं तु नलोपापवादभूत एव निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वाविशेषेणापि तस्य बाध इत्यन्यत् । एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितञ्चेदमपवादो रुर्नलोपं बाधिष्यत इत्यर्थकभाष्येण । एतदेव नलोपे कृतेऽकारस्यावकाशत्वशङ्का तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् । तदन्तस्यापीति । पदाधिकारस्यात्वात् । पदरूपवर्तीति निषेधस्तु प्रत्ययविधिविषय इत्यसमासे निष्कादिभ्य इति

तीत्यर्थः । यः शतेति । शतृप्रत्यय इत्यर्थः । आच्छीन ॥ वेति वर्त्तते उत्तरसूत्रे नित्यग्रहणात् । नाभ्यस्तादित्यतो नेति तु नानुवर्त्तते निषेधस्य प्राप्तिपूर्वकत्वादत्र च प्राप्त्यभावात् । नुमग्रहणन्तु स्पष्टार्थम् । शतुरवयव इति । परो यः शतेति तु नोक्तन्तदन्तीत्यादावेकादेश उभयत आश्रयणे ऽन्तादिवद्वाबाभावेन तेन व्यपवर्गालाभेन च नुमभावापत्तेः । अवर्णश्च शतृभिन्नावयव एव गृह्यते ग्यवकारेणाव्यभिचारात् । शप्श्यनोः ॥ आदितिकिम् । भातीत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणे न स्यादादित्युक्तौ तु वर्णप्राधान्यात्र प्रत्ययलक्षणं नलुमतेति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्य एवेति भावः । पचन्तीत्यादि । बहुवचने नपुंसकस्य झलच इति नुम् । निरवकाशत्वमिति ॥ इदमुदादिरूपधिबलिर्ठाञिति सूत्रे शेषाद्विभाषेति सूत्रे च भाष्ये स्पष्टम् । परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वे प्रकृते तदभावेनाबाधकत्वेपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि स्वाम्मीत्येवेत्याहुः । धनुरिति । र्वोरिति दीर्घस्तु न रेफान्तस्याधातुत्वात् । श्रेयांसीत्यादौ युगपद्द्वयोरन्त्यादच परत्वायोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न सङ्कृद्गतिन्यायात् । किं चान्त्यादचः परो मित्प्रयोक्तव्य इति मिदचइत्यस्यार्थेन द्वयोर्मिलितयोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुमद्वयप्रसक्तिः पुनः प्रसङ्गविज्ञानेपि । किञ्च सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति नपुंसकस्येति सूत्रे भाष्ये स्पष्टम् ॥ इति हलन्तानपुंसकलिङ्गाः ॥

स्वरादि ॥ स्वरादीनामपि निपातसंज्ञैव तु न कृता स्वरादौ निपाता आद्युदात्ता इत्यापत्तेः । एतेन चादीनामप्यव्ययस्त्वेन कार्यन्यपास्तमित्यन्यत्र विस्तरः । स्वरित्यादि । अनुकरणान्येतानि तत्तत एव निर्देशात्र स्वाद्युत्पत्तिस्तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता । स्व आगत स्वास्थित. स्वः पश्यत्यादिदर्शनात् । गणे च तन्त्रेण सर्वेषामुच्चारणम् । उच्चैरित्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुगादीनि क्रियाप्रधानानि क्रियाप्राधान्यस्त्वेषांद्वयोरमेव विशेषणत्वेन स्पष्टस्त्वेदन्तद्वितस्र्चेति सूत्रे कैयटे मार्यात्स्वरं मान्ते अव्यये मार्यास्वरमिति सूत्रस्यभाष्यप्रामाण्यात्स्वरमित्यव्ययत्वमप्रामाणिकमिति परे । बहिरिति । तेन तुल्यन्तत्र तस्यैव तदर्हमिति विहितः उपसर्गाच्छन्दसीति विहितस्य च्छान्दसत्वादेव न संज्ञा । वस्तुतस्तद्धितश्चेत्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । अन्तरान्तरेणेति । अन्तरान्तरेण युक्ते इति सूत्रे भाष्ये ऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः

प्रक्षिप्तः । अस्तीति । धनवानित्यर्थके अस्तिमानित्यादौ धनवाचिनः सत्त्व-
वचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः । विनिगमनाविरहेण
विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात् तेनैव सिद्धिरिति तु मतुप्सूत्रे
भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनबोधादस्ति कथास्वदर्थतः साम्यमिति
तद्भावः । एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् । नमसिति । महसां
नमसामिति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः । प्रताम् प्रशामिति । प्रतानिति
नान्ताव्ययस्य पृथक् पाठसामर्थ्यादपदान्तत्वाच्चास्य नत्वाभावः । प्रशानिति
नान्तपाठोऽसाम्प्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः स्वरादौ कन्यादिवत् ।
कृन्मेजन्तसूत्रस्थभाष्यस्वारस्यादेवमेव । तत्र स्वरादिष्वप्रामाणिकः पाठः ।
अव्यये नञ्कुनिपातानामित्यत्र पृथक् नञ्ग्रहणं त्वकरणिरित्यादौ परस्यापि
कृत्स्वरस्य बाधनार्थमित्याकरः । एवं माङोऽपि स्वरादौ प्रक्षिप्तः पाठः । याव-
त्तावच्छब्दावव्युत्पन्नौ । उपसर्गविभक्ति । अत्र प्रतिरूपकत्वं विनिगमनावि
रहादर्थतः शब्दतश्च गृह्यते । "गेये केन विनीतौ वा" इत्यत्रापि वामित्यस्य
युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव । स्वरादौ तु नार्थतोऽसम्भवात् ।
एतेन युग पततीत्यादिव्युत्पत्त्याश्रयणेन युगपदित्यादीनां विभक्तिप्रतिरूपक
त्वादेव सिद्धेः तथा गणे पाठो व्यर्थ इत्यपास्तम् । एवञ्चादित्यपि लुप्तषष्ठीक
विभक्तिप्रतिरूपकमव्ययम् । अत एव "विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वपदविभाग" इत्या-
दौ त्वदादीनीति नैकशेषः । अवदत्तमिति । अत्र क्रियायोगेऽपि "अवदत्तं विद-
त्तञ्च प्रदत्तञ्चादिकर्मणि । सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते" इति भाष्य
वचनेनोपसर्गत्वाभावबोधनद्वारा तादृशाभावो ध्वनित इत्याशयः । आकृती-
ति । अह इत्यहनीत्यर्थः । शमिति न स्वरादिषु तस्याग्च उच्चम् चेति
व्युत्पत्त्या शिवादिवाचकम् । अवतोष्टलोपश्चेति सिद्धे ग्रन्थगौरवाकारे न
उभयोरपि स्वरादित्व व्याख्यानात् । अन्ये कृन्मेजन्त इति तु न सिद्धेति
स्वरव्ययमित्यगणादिपाठेन नियमादप्राप्तेः । गणादिव्युत्पत्त्यनाश्रयत्वाद्
स्वरादिपाठतो भवति तर्हि स्व्यन्तानामेवेति तदर्थः । अन्यथा व्यन्तानां
निपातत्वादेव सिद्धेः तद्वैयर्थ्यं स्पष्टमेव । स्वरादिनिपातमित्यत्र निपात-
पदं गौणमुख्यन्यायाप्रवृत्तिरनित्यत्वात् । अन्यर्थादिति प्रगृह्यत्वमिवेदमपि
न स्यात् । एवमभिप्रायेण साधुरित्यर्थं साधीय इत्यपि । सर्वशब्दोऽत्र
सर्वः पटो दग्ध इतिवदवयवकार्त्स्न्ये इत्याशयेनाह । यस्मात्सर्वेति ।
वचनत्रयात्मिकेत्यर्थः । नेति । किन्त्वेकवचनमेवेत्यर्थः । ननु सङ्ख्या-
कारकबोधकैरैकवाक्यतया सुपां विधानमिति पक्षेऽव्ययाद्ये सङ्ख्याका-
रकयोरभावात्कथं विभक्तिः । अव्ययादाप्सुप इति ज्ञापकाश्रयणे च सर्वापि

किं च विहितानां नियमपक्षे ऽपि नास्योपपत्तिस्तत्पक्षे सर्वेष्वर्थेषु विधेयतया
प्रधानप्रत्ययार्थे ऽन्वयेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनैव
ज्ञातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते निय-
मश्च द्विविधोऽर्थनियमः प्रत्ययनियमो वा । अन्त्योऽपि द्विविधः प्रकृतार्थापेक्षः
सामान्यापेक्षो वा । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्त-
दा द्वितीयैव । कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवेत्यादि-
रर्थनियमः । अत्र पक्षे सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो विभक्तीनामनियतत्वात् ।
कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव न करणादौ । कर्मादि-
योग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा न कर्मादौ संख्यावदर्थयोग्यप्रातिप-
दिकादेकत्वादावेवैकवचनादि न द्वित्वादावित्यादिः प्रकृतार्थापेक्षप्रत्ययनि-
यमः । अत्रापि पक्षे सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो लभ्यन्ते । अथ प्राति-
पदिकाच्चेद् द्वितीया तदा कर्मण्येव नान्यत्र प्रातिपदिकाच्चेत्प्रथमा तदा
मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवेत्यादि
सामान्यापेक्षः प्रत्ययनियमस्तदाव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापका-
देव सेति सर्वापि । यद्यपि सुपामिति संख्याकर्माभयार्थकत्वेन कर्मण्येव
नान्यत्रेति वक्तुमशक्यं तथापि कर्मण्येव न तु तदभावे इत्याकारो वक्तुं शक्यः
स्पष्टश्चेदं सर्वं वचनेत्यादिसूत्रेषु भाष्ये । तत्र हि अर्थनियमे प्रकृतार्थापे-
क्षप्रत्ययनियमे च सप्तापि विभक्तयः सुपो उक्ताः । सामान्यापेक्षप्रत्ययनियमे
च सुपो ऽप्राप्तिरेवोक्ता अव्ययादाप्सुप इति सूत्रभाष्ये ऽपि स्फुटमिदमिति
वेदञ्च ताद्धितश्चेति सूत्रे भाष्यकृतः एकवचनमित्यत्र सूत्रे कार्यमकथनाच्च
न कार्यं विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नत्वादेकवचनमित्युत्सर्गस्तस्य द्वि-
त्वबहुत्वयोरितरे बाधके भविष्यत एकत्वैकत्वत्वेऽपि भविष्यति । अलिङ्गास-
ंख्येभ्यो ऽव्ययेभ्य एकवचनम्, द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यात्सं-
ख्यासंज्ञावाद्युक्त्वाभावेऽपि तत्सिद्धेः । द्विबहुत्वयोर्द्विवचनबहुवचनेनाक्तावशेषादे-
कवचनस्यैकवचनमित्यनुवचनं विनापि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन साम-
र्थ्यादप्राप्तप्रापणार्थमेतादिति कर्माद्यभावेऽप्यनेन प्रवर्तते इति विनिगमनाविरहा-
त्सर्वविभक्त्येकवचनमनेन । अत एवाव्ययादाप्सुप इति प्रत्याहारग्रहणं चरितार्थं
तृतीयासप्तम्योरपि च । प्रथमापि मात्रग्रहणात्प्रातिपदिकार्थस्य कर्मत्वाद्य-
विवक्षायां संभावनातोऽवेति तस्या ऽप्यप्राप्तिरव्ययेभ्यः । पचतिकल्पमित्यादौ तु
नानेन सर्वैकवचनम् । सर्वथा ऽप्राप्तावेव तस्य विधायकत्वात् । अत्र च न तथा
कर्तृत्वकर्मत्वसत्त्वेन क्रियाया स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति
बोध्यम् । यत्तु कैयटेन प्रथमातिक्रमे कारणाभावादेकनियमबाधे गौरवाच्च

प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोध्यते इति तद्धितश्चेति सूत्रे रूपसूत्रे
चोक्तम् । तन्न । स्वादिसूत्रे प्रथमायाः प्राथम्येऽपि नियमशास्त्रपर्यालोचनया
द्वितीयाया अपि तत्त्वेन तस्याविनिगमकत्वात् । त्रिशान्त्याणामित्यत्र त्रया-
णाद्यग्रहणेनाद्युदात्तश्चेति सूत्रे आदिग्रहणेन पाणिनिना स्वशास्त्रे एतद्व्या-
ख्यानाश्रयणज्ञापनाच्च । अत्र प्रथमा संपूर्णाध्यपेभ्यः प्रथमायाः एकवचन-
मित्यादि पाठान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते तान्यसङ्गतानि उक्तरीत्या
तेषामुक्तिसम्भवाभावात् । घट इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन
द्वित्वाद्यप्रतीतौ संख्यावदर्थत्वेन सन्निभूतत्वात् प्रकरणाच्च । बहुष्वित्यादिसू-
त्रभाष्योक्तास्तपरत्वैकदेशिनो न सिद्धान्तिन इति तत्त्वम् । असर्वविभक्तिरिति ।
बहुव्रीहिलभ्यो विशेष्य इत्याह । तद्धितान्त इति । केवलस्य तस्य तद्धितस्य
प्रयोगाभावेन फलाभावात्संज्ञाविधावपि तदन्तविधिरिति भावः । नन्वेवमपि
पचतिकल्पमित्यादावतिव्याप्तिः । उक्तरीत्या तेषामसर्वविभक्तित्वात् । उभय-
शब्दे चातिव्याप्तिस्ततो द्विवचनानुत्पादादत आह । परिगणितमिति । एवञ्च सूत्रं
न कार्यमिति भावः । तसिलादय इति । पञ्चम्यास्तसिलित्यारभ्य द्व्येकयोश्च
धमुञित्यन्ता इत्यर्थः । शस्प्रभृतय इति । बह्वल्पार्थाच्छसित्यारभ्याव्यक्तानुक-
रणादिति डाजन्ताः । यत्त्वेवप्रतिकृतावित्यधिकारे एवपूर्वोऽश्वमात्याच्छन्द-
सीति थान्तस्याप्य स्वरादावस्यानादिति पाठेनाव्ययत्वमन्तेन आमित्यणादि-
सूत्रविहितस्यापि यथा इत्युदाहरणं आमिविधायकं छन्दसीति नानुवर्तते एव-
ञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ
एव लिङ्गम् । अयामावश्यमिति तु च्छान्दसम् । अम आमिति । अम् च छन्दसि
क्रिमान्तांद्वितिविहितौ । कृत्वोर्थ इति । कृत्वसुच्सुचः । तसिवतीति । तेनैक-
दिक्त तसिश्च तेन नव्यमित्यादिना विहितौ । एवञ्च स्वरादिषु वर्तीति पाठे
फल चिन्त्यम् । नानाञाविति । विनञ्भ्यां नानाञौ न सहेति विहितौ ।
कृन्मेजन्तः ॥ कृद्यो मान्त इति । कारयामित्यामन्ते आम इति लुकप्रसिद्धिरिति
भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद्विशेषणं गणे प्रशामशब्दपाठात् ।
अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणेन कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं
स्पष्टमेव । तेन प्रतामौ लक्षमाचक्षाणौ नेतारित्यादिवन्नातिप्रसङ्गः । न चाधये
हे आधे कुम्भकारेभ्य इत्यादौ गुणे यत्वे च कृते कृत एजन्तत्वेन संज्ञापत्तिः ।
न च बहिरङ्गत्वं गुणादेः संज्ञायाः कार्यार्थत्वात्संज्ञाकार्यस्य तत्त्वेन संज्ञा
या अपि तत्त्वात् लिङ्गस्याऽन्यायित्वेऽप्यश्रयाभावादावत्राप्यापत्तेरिति वा-
च्यम् । सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकलुक्
बाधेऽपि संज्ञाबाधे मानाभाव इति वाच्यम् । गोज्यपदे सन्निपातनिमित्तकस्यौ-

यसन्निपातविघातकस्य क्ङिति चेति निषेधस्य तया निवृत्तावपि उपादास्तेत्यत्र-
कित्त्वापत्तेः । कित्त्वफलन्तु तत्सन्नियोगशिष्टत्वासिद्धिरेवस्त्वोपादिस्तेति स्यात् ।
तत्र हि क्ङिदिति व्यपदेशातिदेशएवेत्यप्रवृत्तिकाले कित्कार्यस्यातिदेश्य-
स्याभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तत्तच्छास्त्रप्रवृत्तिर्निमि-
त्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या । साक्षात्परम्परया वा स्वसन्निपा-
तविघातकस्य स्वयमनिमित्तमिति परिभाषार्थः । एतेनात्राकजादि स्यादित्यपा-
स्तम् । अकजाद्येकवाक्यतापन्नाव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवा-
क्यतापन्ना तु न गुणादितो ऽन्तरङ्गा उभयोरपि शब्दतः सुबाश्रयत्वात् । अव्य-
यादा ॥ एतदाश्रियेत्यतो लुगनुवर्त्तते । विहितेति । अङ्गसञ्ज्ञायां विहितत्वां
शप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः । आप्सुप्भ्यामाक्षिप्ताङ्ग-
स्याश्रयरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः । तेन कुम्भकारेभ्य इत्यादौ
सन्निपातपरिभाषया ऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः ।
अत्युच्चैसाविति । अत्राधिकरणशक्तिप्रधानस्याप्युच्चैसशब्दस्य शक्तिविषये
शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया ऽत्यादयः क्रान्ताद्यर्थे इति समासे अवयव-
भूतोच्चैःशब्दादव्ययात्परत्वेन लुक् स्यात्समुदायस्य तु नाव्ययत्वं लिङ्गाद्य-
न्वयित्वादित्यभिमानः । समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते । यद्यपीति ।
तदन्तेति । शब्दस्य विशेष्यत्वात्प्रयोजनं सर्वनामाव्ययसञ्ज्ञायामिति ग्रावनि-
कस्तदन्तविधिरिति भावः । न गौणे इति । अयं भावः । सामानाधि-
करण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदवत्त्वेन ह्यव्ययपद-
बोधकमिति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणे ऽनुकरणावश्यकत्वे इत
रेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः । वस्तुतो
ऽर्थस्य प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्येण च प्रसिद्धान्तरङ्ग-
पदान्तरानपेक्षानुपसर्जनीभूतस्वार्थलिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य
नाप्यवयवस्य सञ्ज्ञा । अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृ-
त्यात्युच्चैसावित्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्यतत्प्रत्या-
ख्यानमुक्तमितरस्य विहितविशेषणमङ्गलोपो वा व्यर्थ एवाव्ययात्परत्वस्याप्यभा-
वात् । उच्चैरौ उच्चैराभ्यामित्यादेरभिधाने तु न मानम् । अत एव भाष्ये
एतन्नोक्तम् । अलिङ्गत्वादिति । नन्विदं सदृशन्त्रिष्विति विरुद्धमत आह
लिङ्गेष्वादि । अयं भावः । यथोपक्रमोपसंहाराभ्यां ब्रह्मपरताया अप्यस्याः
श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारस्तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरतापीति
विभक्तिवचनशब्दे । कारकसंख्यापरौ प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गे-
ष्वित्यादिविषयसप्तमी । तत्तद्विषये सादृश्यस्य लिङ्गाद्यभावाश्रयत्वेन ।

लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषयं तस्य लिङ्गयोगसत्त्वात्संख्या-भावस्तु सर्वधारणः । तदभावादिसादृश्यादेव यत्त्रिविधं रूपं तन्न प्राप्नोती-त्यर्थः । प्रसङ्गादाह । अष्टौति । अशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । भागु-रिराचार्यः । अपिनहवर्यादिष्वप्यादेरकारस्यैव लोपः । इदं भाष्ये न दृश्यते निशादिशोरिगुपधलक्षणे के ऽदन्तत्वादेव टाप् । क्विनादिमित्यपि अत एव ह्याप्प्रातिपदिकादिति सूत्रे आप्ग्रहणं न कार्यमकारान्तात्टाप् तथान्तवद्भावा-त्प्रातिपदिकत्वेनैव सिद्धेः यत्तु हलन्तात् क्रुञ्चा उष्णिहा देवविशेति, अत्राप्यकारान्तादेव क्रुञ्चानालभेत उष्णिहककुभौ देवविशामिति । अन्ये क्यप्र-त्यय एव विषय इत्युक्त्वा वहुराजेति डाबन्तार्थमाप्ग्रहणमिति भाष्ये उक्तं सङ्गच्छते तस्माद्धावेत्यसाध्वेवेति शिवम् ॥ इति अव्ययानि ॥

स्त्रियाम् ॥ अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वादीनां गुणाना-मुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यमेकार्थे शब्दान्यत्वादृष्टं लिङ्गा-न्यत्वमिति भाष्याकरयोर्निष्टं केवलान्वयि । इयं व्यक्तिरिव वस्त्वयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् केन चिच्छब्देन क्रियाद्वस्तु एकैकविशि-ष्टमेव केन चित्पर्यायेण लिङ्गद्वयविशिष्टं केन चिल्लिङ्गत्रयविशिष्टमिति लिङ्गा-नुशासनादितो निर्णयम् । तत्र स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृत इत्या-दिलैङ्गिकलिङ्गसम्बन्धे शास्त्रीयं कार्यं शास्त्रीये उक्त एव । तत्सम्भवेतु शास्त्री-यविशिष्टे लौकिके शास्त्रीयमपि शब्देन बुद्धेत तथा ऽनभ्यासात । उपचयाप-चययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षाया सामान्ये नपुंसकमिति प्रवाद इत्य-न्यत्र विस्तरः । अत इति वर्णग्रहणात्तदन्तविधिमित्याह । अकारान्तस्य चेति । वाच्य यत स्त्रीत्वमिति । तद्विन्यार्थगत यत्प्रत्ययस्य स्त्रीत्वमित्यर्थ । एवं व्याख्याने फलमेव स्फुटम् । तत्र द्योत्य इति । प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः । द्योत्यस्य तु विशेषणत्वमेवेति स्पष्टमाकरे । वागादिषु विनापि टाबादिकं तस्य बोधाच्च । अत एव व्याकरणेत्यादौ कर्मत्वनिहारे णत्व स्त्रियामिति णत्व णत्वः स्त्रियामित्यपि च हरिप्रदिष्टः । व्यालुनीतरन्याद्रौ त्रिष्वंद्रु मुखद्रु भवतीति न्यायेन द्योतकसमुच्चयस्य दृष्टत्वात् । टाप्यादीति । स चाधिकारः प्रातिप-दिकादेव तत्र मन्विधानादजादिरूपमेव । नन्वजादिष्वकारान्तपाठो व्यर्थ इत इत्येव सिद्धे इत आह । अजाद्युक्तिरिति । येन नाप्राप्तिन्यायादिति भावः । एतेन ङीप् कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् वारणार्थं इत्यपास्तम् । ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः । स्त्रीत्वञ्च प्रत्ययस्या प्रकृत्यर्थनिष्ठमेवेत्यत आह । अजादिभिरिति । व्याख्याना-देतत् लब्धमिति भावः । अन्यत्र तु स्त्रियामिति तदन्तस्यापि विशेषणं व्याख्या-

नावेव एवञ्च पञ्च मुत्वानो यस्यां सा पञ्चसुत्वरीत्येव । पञ्चाजीति । पञ्चानां मजानां समाहार इति द्विगावकारान्तोत्तरपद इति स्त्रीत्वे द्विगोरिति ङीप् । अजादिभ्य इति व्याख्याने ऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च वनोर चेत्यत्रेवात्रापि तदन्तविधिसंभव इति भावः । न च तदन्तविधावपि अतत्वात्स्त्रिया-मित्यजादीनामेव विशेषणमिति वाच्यम् । अनुपसर्जनाधिकारेण तदन्तग्रह-णस्येव स्त्रियामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासे ऽजशब्दमत्त्वेपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाजशब्दमात्र-वाच्यम् । सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः । चटकेति । क्षिपकादित्वादित्वं न । ह्रस्व इति । असंज्ञायान्तु भस्त्राफलेत्येव । संभस्त्रेति सदृशेति मूलावन इति च पाककर्णेति प्राप्तस्य ङीषो बाधनार्थम् । एवञ्च श्वेतफला त्रिफलेत्यप्यत्र बोध्यम् । शूद्रा चेति । जातिलक्षणङीषोपवादः । जातिश्चेद्भवत्येत्यर्थः । पञ्चशूद्रीति समाहारे जातिवाचकत्वाभावात्, शूद्र-शब्दार्थगतस्त्रीत्वाभावाच्च न टाप् । जातिश्चेदित्यस्य कृत्यमाह । पुंयोगे त्विति । न चात्र गौणत्वम् । सदृशलाक्षणिकस्यैव गौणत्वात् । गौणमुख्य-न्यायस्य पदकार्यविषयत्वाच्चेति भावः । अमहत्पूर्वेत्यत्रापि जातिश्चेदिति संबध्यते । महत्पूर्वा न टापं लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वस्जातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन मृगती रक्कुक्कुटाण्डवत्समासे ततः स्त्रीत्वविवक्षायां महती शूद्रेत्यर्थे महाशूद्रीति टाबेव अमहत्पूर्वेत्यत्र जातिरित्यस्यासंबन्धे ऽनुपसर्जनाधिकारेण प्रधानेन तदन्तवि-धिसत्त्वाज्जातेरिति ङीष् स्यात् शूद्रशब्दे जातिवाचकत्वस्य स्त्रीत्वे शूद्रशब्दा-र्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्योते निरूपितम् । महाशूद्रीति । आभीरी तु महाशूद्रीत्यमरः । ग्रास्त्वणात्तु यकन्यायामाभीरः । नृपाच्छूद्रायामुत्पन्नोयजातकन्या । अत्रानुलोमसङ्कराणां मातृजातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्यय शूद्रशब्दोर्थवानेवेति शूद्रशब्दार्थस-मवेतस्त्रीत्वमप्यत्रास्ति तदर्थसमवेतस्त्रीत्वेपि शूद्रशब्दादेव टाप्स्याच्च तदन्तात् ग्रहणवतेति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता । अत एव शङ्ख-स्मृतौ ब्राह्मणक्षत्रियवैश्यः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्तीत्युक्तमिति भावः । यत्तु शूद्राभीरमित्यादौ सामान्यविशेषवाचित्वात् द्वन्द्वाभावमाशङ्क्याभीराजात्यन्तराणीति त्यदादीनीति सूत्रे भाष्ये उक्तं तत्स-मारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । तेन न म्रु नदीति सूत्रे ङायामादेश इति भाष्यप्रयोगः सिद्धः । प्रथमाध्यायचतुर्थपादे चमसवद्विशेषा-दिति सूत्रे शाङ्करभाष्यवाचस्पत्योरजायाश्छागेति टाबन्तप्रयोगो दृश्यते ऽतश्छा-

गोशब्दोऽप्यजादिष्विति केचित् । उगितश्च ॥ उगित्त्वेन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । प्रत्ययविधाविति निषेधस्तु न । उगिद्वर्णग्रहणवर्जमित्युक्तेस्तदाह । उगिदन्तादिति । भवतीति । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय एवेति भावः । भवतु इति उगितः प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्रग्रहणाभावेन प्रत्ययग्रहण इति परिभाषाया अप्रवृत्त्या निर्यमतीत्यादौ न दोषः । अञ्चतेश्चेति । नलोपिनोऽञ्चतेरित्यर्थः । नियमेऽपि नलोप्यञ्चतिविषय एवेति निरूपितम् । व्यपदेशिवद्भावलभ्यमर्थं स्पष्टप्रतिपत्तये आह । वनन्तादिति । नन्वत्र प्रत्ययग्रहणपरिभाषया बहुधीवरी न सिद्ध्येदत आह तदन्ताच्चेति । तत्परिभाषालभ्यवन्नन्तेन प्रातिपदिकस्य विशेषणादिति भावः । सामान्येति । सूत्रेऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः । इदं मतुवसोर्जोयो वेति सूत्रेषु भाष्यकैयटयोः स्पष्टम् । इदं सूत्रं न ङीब्विधायकं किं तु ऋन्नेभ्य इति प्राप्तङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकमुभयविधौ गौरवात् । शर्वरीति । शृधातोरन्येभ्योऽपि दृश्यन्त इति वनिप् । एतत्सूचयन्नाह । हशन्ताद्विहित इति । अपेक्षितो ग्रहणाच्चेह मघोनो कनिप्रत्ययान्तनिपातितत्वादिदम् । बहुव्रीहौ वा ॥ वनो बहुव्रीहाविति प्रतिषेधे प्राप्ते इदम् । एतच्च वार्तिकमत एवेति सिद्धङीबनुवादेन राद्विधायकम् । अत एवेदमनुपधालोपिन सर्वत्र्यादौ नेति विकल्पोऽसिद्धो वनो र चेत्यनेन ऋन्नेभ्य इत्यनेन ङीपो विषयमेवेत्युक्तम् । पद ङाविति । तेन द्विवचने रूपत्रयम् । कृतसमासान्त इति । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव समर्थनायाधिकारानुरोधादिति भावः । तेन पादयतेः क्विबन्तस्य ग्रहणं न । द्विपदीति । द्वौ पादावस्या इति बहुव्रीहौ संख्यासुपूर्वस्येति पादशब्दान्त्यलोपस्ततो ङीपि पादः पत् । टाबृचि ॥ पूर्वसूत्रप्राप्तङीपोऽपवाद इति प्राच्यमतमयुक्तम् । शेषाद्विभाषेति सूत्रस्य भाष्यविरोधात् । तत्र हि प्रतिपदविहितसमासान्तानाङ्रूपां वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तम् तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । बहुव्रीहेरूधस इत्यत्रापि भाष्ये स्पष्टमेतत् । अत एव ड्याप्प्रातिपदिकादिति सूत्रे पादशब्दसमानार्थमकारान्तं पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यानम् । श्रूयते च छन्दसि तस्याः सप्ताक्षरमेकं पदमेकः पाद इत्यर्थ इति च भाष्यात् सङ्गच्छते तदा हि ऋच्यपि एकपदी एकपादित्यपि इष्यत एव । एतच्चैकपाद्गतस्य सूत्रमते सिद्धये टाबृचीत्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम् । पादन्तस्य ऋच्यनभिधानमिति तु न भाष्याशयः । ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्यासिद्ध्यापत्तेरिति बोध्यम् । केवलपाच्छब्दस्य स्त्रियां वृत्तिर्वाऽसम्भवेनात्र तदन्तविधिः । पादिद्-

स्यादिति । आपः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः प्रियपञ्चा द्वापञ्चीत्यादौ तदन्ते ऽपि । स्त्रियां यत्प्राप्नोति तन्नेत्यर्थादन उपधेति ङीबपि नेति बोध्यम् । ध्वनितञ्चेदं भाष्ये । परे त्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः । नलोपस्य तत्त्वाभावात् । संज्ञाङ्गसबहिरङ्गत्वानाश्रयणात्पञ्चेत्यत्र तु स्त्रियां यत्प्राप्नोति तन्नेत्यर्थाश्रयणाल्लुप्तपूर्वषट्त्वाश्रयो निषेधः । अत एव षट्संज्ञायां नलोपासिद्धत्वस्य न फलमिति न लोपः सुब्बित्यत्र भाष्ये उक्तमित्याहुः । मनः ॥ न ङीबिति । अयमन इति चोक्तरीत्या टाब्ङीपोरुभयोरपि निषेधः । एतेन सीमभ्यां बहुयज्वभ्यां बहुधीवभ्यामित्यत्र डाप्ङीपोरभावे नलोपे टाप् दुर्वार इत्यपास्तम् । डाबुभा ॥ उभाभ्यां ग्रहणाभावे संनिहितस्यान एवानुवृत्तिः संभाव्येत । अत नसामर्थ्यात् डाप्निषेधयोः पर्याये सिद्धे ऽन्यतरस्यामिति स्पष्टार्थम् । भाष्ये त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेनानो बहुव्रीहेरित्यनुवर्त्य ततः पक्षे ऋन्नेभ्य इति ङीबर्थम् । एवञ्चान उपधेति सूत्रं नियमार्थमिति बहुधीवरीत्यत्र ऋन्नेभ्य इति ङीबिति तत्सन्नियोगेन रेफादेशः सिध्यतीति बहुव्रीहौ वेति वचनं प्रत्याख्यातम् । अनउपधेति ऋन्नेभ्य इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः । अन उपधेति । बहुव्रीहेरूधस इत्यतो बहुव्रीहेरिति संख्याव्ययादेरित्यतो ङीबिति चानुवर्तते । अनुपसर्जनादित्यनुवृत्तमप्यत्र न संबध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्तबहुव्रीहौ अनुपसर्जनस्यासंभवात् । ध्वनितञ्चेदं वनो र चेति सूत्रे भाष्ये । तत्र ह्यनो बहुव्रीहेरित्यनन्तरमुपधालोपिनो वेति न्यासो दर्शितः । विध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणं त्वनुपधालोपि सुपर्वन्त्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । ककारादिति । अनेन वर्णमात्रं विवक्षितमकार उच्चारणार्थ इति सूचयति । न च कारिकेत्यत्राकारेण व्यवधानादापरककाराभावेनेत्वानापत्तिरेकादेशेऽप्यचः परस्मिन्निति स्थानिवत्त्वाद्व्यवधानमेवापि परतो ऽकारस्य कात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते न प्राप्नोतीति वाच्यम् । आनन्तर्यांशोपस्थितावपि येन नाव्यवधानमिति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः । रथकट्यादौ च नातिप्रसङ्गः । केति सङ्घातग्रहणे त्वेतिका इत्याद्यसिद्धिः । अकव्यकारस्योच्चारणार्थतया कशब्दाभावात् । न यासयोरिति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते । अकाज्ज्ञापकस्य सकारवैशिष्ट्यमादायेत्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम् । तावतापि प्रत्ययस्थत्वांशानुपपत्तेश्च । न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्रा-

प्तेः । द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादिकेनैवाकारेण व्यवधानात् । पुनः स्थानिवत्त्वन्तु न । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम् । तस्य टापैकादेशेनापहारेणादर्शनात् । अत एव न यासयोरिति निषेधसार्थक्यम् । सुपग्रहणन्तु स्पष्टार्थं तत्र ककारस्य प्रत्ययस्याभावात् । असुप इति बहुव्रीहिणानादृतविशेषणं बहुचर्मिकेत्यादावित्वानापत्तेः । प्रत्ययलक्षणनात्रस्य सुपत्वस्वात् । नञनुमतेति तु नात्र लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्यं तन्निषेधप्रवृत्तेः । इदन्तु टाप्यङ्गमिति दिक् । सर्विकेति । अव्ययसर्वनाम्नामित्यकच् । कारिकेति । करोतेर्ण्वुल् । नेः शब्दात्स्वार्थे कः । सुपः परो नेति प्रसज्य प्रतिषेधेन व्याख्याने फलमाह । बहुपरिव्राजकेति । पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन सुबन्ताभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः । परिव्राजकेति बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोध्यम् । कटुकेति । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्चान्त्यककारादुत्तरस्याकारस्येत्वं स्यादिति भावः । मामकेति । कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे युष्मदस्मदोरन्यतरस्यामित्यणि तवकममकावेकवचने इति ममकादेशे आदिवृद्धिः । नरिकेति । कै शब्दे इत्यस्मादिच उपदेशइत्यात्व आतोनुपसर्ग इति के आतो लोप इटि चेत्यालोपः । न यासयोः ॥ प्रत्ययस्थादिति प्राप्ते निषेधोयम् । यकेति । यत्तदोरकच् त्यदाद्यत्वे टाप् । सन्निपातपरिभाषा ऽस्मादेव निषेधाच्चिदेशाच्चानित्येति नादुरेभावात्कथं टापिति न शङ्क्यम् । त्यकनश्चेति । मृदस्तिकन्निति इत्वाभावनिर्देशेन ज्ञापकेनास्येत्वं वारयितुं शक्यमिति भाष्यकृतः । पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे पञ्चमृत्तिक इत्यस्यानभिधानमिति तदाशयः । अत्रात्यिकेति कर्तव्ये ऽकारोच्चारणादित्वं नेति न वक्तुं शक्यम् । पञ्चापत्यका ग्राम इत्यादावकारश्रवणानापत्तेः । टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न उभयोरपि न लुमतेत्यनेन निषेधात् । अत एव कतोत्याद्यौ वार्त्तिकमते ऽपि न गुण इत्यन्यत्र विस्तरः । आशिषि च ॥ आशिषि विहितस्य वुनोस्येत्वं नेत्यर्थः । जीवतादित्यर्थे आशिषि चेति वुन् । देवदत्तशब्दादनुकम्पायाङ्कन्यजादौ च विभाषा लोपो वक्तव्य इति दत्तशब्दस्य लोपः । देवदत्तिकेत्युपन्यासस्तु दत्तलोपमभिव्यक्तुम् । ध्रुवकेति । ध्रु स्थैर्ये पचाद्यचि कुटादित्वात् गुणाभावे उवङ् ततष्टाप्यज्ञातार्थे कः । केण इति ह्रस्वः पुनष्टाप् । चटेः संज्ञायां क्वुन् वार्त्तिकोक्ता गणा आकृतिगणाः । तेन कन्यका ध्रुवका चलका एटकादयः साधवः । उदीचामित्वेति । अत्रापि शकु-

नार्विति संबद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् । सूतका पुत्रि ॥ पुत्रकेत्यकार सहितः पाठोपपाठः । कैयटाद्यसंमतेः । सूत शब्दात्स्वार्थे कन् । वृन्दशब्दाच्छृङ्गवृन्दाभ्यामारकन् इति मत्वर्थीय आरकन् । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भावः । हीन इति । शार्ङ्गरवादित्वाज्जातस्येति भावः । अन्यत्र । सूतकादौ । उदीचाम् ॥ यकपूर्वत्वञ्चाव्यवहितमेव एवं प्रत्ययस्यादिति सूत्रे कात्पूर्वत्वमपि । उदात्तस्वरितयोरित्यादाविवानुवादे ऽपि निर्दिष्टपरिभाषाप्रवृत्तेस्तेन क्षाराशब्दात्के ह्रस्वे इत्वविकल्पो न । नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह इद्वेति । आतः किमिति । उदीचां यकपूर्वाया इत्येवास्तु । यकपूर्वस्त्रीबोधकाकारस्येत्यर्थः । सांकाश्यके च नातिप्रसङ्गः । प्रत्ययावयवत्वेनाकारस्य स्त्रीत्वबोधकत्वाभावादिति प्रश्नः । बहुलत्वसंस्कारानुरोधाद्व्ययवग्रह्येव स्यात् । न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणं विशिष्य तदनुपादानादित्युत्तरम् । स्त्रीप्रत्ययस्य किमिति । यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः । धात्वन्तेति । धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः । इत्वमिति शेषः । भस्त्रैषा ॥ अयमपि निषेधविकल्प इत्याह अत इति । अत्रातः स्थानइत्यनुवर्तते । तदन्तेति । येनविधिरिति सूत्रे त्यदादिविधिभस्त्रादिग्रहणञ्च प्रयोजनमिति भाष्यात् । अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः । नञ्पूर्वाणामपीति स्पष्टार्थम् । पदाङ्गाधिकारे तस्य चेति सिद्धेः । उपसर्जनार्थमिति । एवञ्चानुपसर्जने आदाचार्याणामित्यात्व भवत्येवोपसर्जने ऽस्य चारितार्थ्येन बाधे मानाभावात् । अन्यस्य । अनुपसर्जनस्य । उत्तरसूत्रमभाषितपुंस्काच्चेति । अन्तर्वर्त्तिनामिति । न एतद्‌ सु इति स्थिते अकचि कृते अकृते वा नञ् तत्पुरुषे ऽन्तरङ्गानपीति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततो ऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः । बहुव्रीहौ तु प्रियैतत्का प्रियैतकत्का वा कप्यभावे प्रियैतकादित्येव सर्वथा नेत्वप्राप्तिः । अनेषकेति । अज्ञातैषका न एषकेति विग्रहः पूर्वं नञ् समासे ऽज्ञाता ऽनेषेति । असभत्रादिति । एषादृति निर्देशात्संज्ञोपसर्जनयोरप्राप्तेरिति भावः । अकजह इति । एवञ्च तदकारस्यातः स्थानिकत्वाभाव इति भावः । अर्थान्तरे त्विति । आत्मज्ञातिधनेष्वित्यर्थः । स्वो ज्ञातावात्मनि स्वन्त्रिष्वात्मीये स्वो ऽस्त्रियान्धने इति कोशादिति भावः । कपत्ययान्तत्वादिति । तत्र च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं केन व्यवधानादिति भावः । संज्ञापूरणयोश्चेति निषेधेन संज्ञाया अपि भाषितपुंस्कत्वबोधनेन संज्ञाभूतेनाभाषितपुंस्काच्चेत्यनेन सिद्धिः । आत्मीयत्वपुरस्कारेणैव

सञ्ज्ञाकरणादिति बोध्यम् । नित्यमेवेति । तत्र स्वकादि कृते आतः स्थानिकत्वाभावः । एवमत्यन्तस्वार्थिककान्तेऽपि नित्यमेवेत्यम् । अकचोऽत्यन्तस्वार्थिकापवादत्वाभावात् । निःस्वकेति । स्वस्या निष्क्रान्तेति विग्रहः । उपसर्जनह्रस्वः टाप् अज्ञातादौ कः । अभाषितेति ॥ स्त्रीविषयाण्वेति नोक्तं स्त्रीनपुंसकदामशब्दात् डाप्यज्ञाता दामा दामिका दामाका दामकेत्यनिष्टापत्तेः । विहितस्येति व्याख्याने फलमाह । बहुव्रीहाविति । अविद्यमाना खट्वा यस्या इति विग्रहे प्रातिपदिकत्वभावे गोस्त्रियोरित्युपसर्जनह्रस्वे ऽखट्वशब्दाद् टापि सुप्यज्ञातादौ के सुब्लुकि केण इति ह्रस्वे पुनःप्राप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनानुक्रम्याप्राप्तावुत्सर्गेण नित्यमेवेत्त्वम्, परविशेषणत्वे तु तादृशखट्वशब्दात्परत्वेन टाप् स्यादिति भावः । शापके कपीति । न खट्वा इत्यत्रस्यापि कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससञ्ज्ञाया समासान्ता इति शास्त्रवचनात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् गोस्त्रियोरिति ह्रस्वाभावे केण इति ह्रस्वे न कपीति निषेधः आपि ऽन्यतरस्यामिति ह्रस्वे कपः प्राग्वर्तिनः खट्वशब्दात्परस्यापो ऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्याय विकल्पो ह्रस्वाभावे तु अखट्वाकेतीति भावः । अयमिति । आचार्यक्रियन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेव स्त्रियामितद्रष्टव्यप्रामाण्यात् । पञ्च स्त्रीगोत्यकृया धनं यस्य स पञ्चगवधन इत्यत्रार्थवत्सञ्ज्ञाकार्यत्वाभावादृजन्तस्य प्रातिपदिकत्वाभावेन न ङीप् । आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्र तु न ङीप् । प्रोक्तात् स्त्रियामधर्तेनेत । अद्यन्नादेर्लुप्तः । अणेऽकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात् । अद्यन्नवर्णगतस्त्रीत्वमादाय तद्वितनिमित्तकस्य न प्राप्तिः । स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तद्गण एतेन स्त्रीत्वे ऽवर्तनात् । अत एव काशकृत्स्निप्रोक्ता मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्रापि न ङीप् । प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप् तदन्तलक्षणस्येति न्यायात् । तस्माद्दुकुकुरवत्स्येव तद्भावत्यम् । तत्र च तदन्तविधिं विना प्राप्तिरेव न । ज्ञापितं तु तदन्तविधौ प्राधान्यादेतदारम्भाच्च स्त्रियामिति इत्यप्रकृतिविशेषणमेवात एव धीवानमतिक्रान्तातिधीवरीति सिद्धम् । एतस्यापि गतेन्व्याख्यानस्यैव व्यावर्त्यम् । अनुपसर्जनादिति च सामर्थ्यात् गृह्यमाणविशेषणमेवेति भावः । तदन्तविधिमिति । अणन्तादेः प्रातिपदिकविशेषणत्वेनाणन्तान्त इत्येव रूपमित्यर्थः । अन्यथा प्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः । प्रातिपदिकादित्यनेन सहानन्वया-

पत्तेः । तत्फलं कौम्भकार्येयसिद्धिः । अन्यथा कुम्भकार्य इत्यापत्तेरेत कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यत्वे तदयोगस्य वक्तुमशक्यत्वात्कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः । निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम् । तद्धितार्थेत्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावे ऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्तिप्रत्याशा न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकार्येयो दुर्वारः । किं च समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढक् स दुर्वार इति वाच्यम् । एतदधिकारादेव ज्ञापकादसहाय एव व्यपदेशिवद्भाव प्रवृत्तेः । अपवर्गत्वाकारार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च तदादि नियमाभावेनाधिकस्य कार्यं बाध्यते न तु न्यूनस्येत्यदोषाच्च । अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव । एत देवाभिप्रेत्यात्र भाष्ये उक्तं समासे च कृते ऽवयवादुत्पत्तावयवस्य वृद्धिः स्यादिति । येनविधिरिति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं गार्ग्यायणः परमगार्ग्यायण इति उक्तं भाष्ये । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यस्तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् मम तु परमगार्ग्यस्यापत्यमित्यर्थे ऽप्युक्तन्यायाद्गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्तथा सति परमगार्ग्यायणः इति स्यादिति तत्प्रयोजनत्वोक्तिसङ्गतिः कैयटोऽपि तदादि नियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यास इत्युक्तवान् यत्तु सर्वादि सूत्रे भाष्ये ऽनुपसर्जनादित्येष योगः प्रत्याख्यात इत्युक्तं तत्त्वत्र वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्योते विस्तरः । टिड्ढा ॥ ठस्येव सिद्धे ठक्ठञोरुपादानं ठन्ष्ठञोर्व्यावृत्त्यर्थम् । अदन्तमिति । प्रत्यासत्त्या टिदवयवाकारान्तमित्यर्थः तेन पञ्चाश्वेत्यादौ ठन्निमित्तोऽपि न ङीप् । कुरुचरीति । कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः टितो ऽप्रत्ययस्यापि सत्त्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्यात्र टिदन्तत्वं कुरुचरशब्दस्यापि बोध्यम् । वक्ष्यमाणेति । वर्तेर्लटः शानच् । टित्वादिति । स्थानिवत्त्वेनेत्यादिः । नन्वपीति लिङ्गादिष्टस्यादेरशास्त्रीयस्याप्यतिदेशो ऽनुबन्धकार्ये ऽनल्विधाविति निषेधाप्रवृत्तिश्चेति भावः । ङित्त्वमिति । लिङ्गादेशानां स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । तद्धि अवयवे ऽचरितार्थतया समुदायोपकारकम् । न चेदं ङित्त्वं स्नुयादित्यादावन्त्यवर्णगुणवृद्धिनिषेधार्थमिति वाच्यम् । विनिगमनाविरहात् । उत औदिति वक्तव्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपौक्पर-

भावोपस्थित्या तस्या अपि इगन्तत्वाच्च । नन्वेवं ब्रूतादित्यत्र ब्रुव ईट्
प्राप्नोति । लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावे ऽपि तिपः पित्त्वस्य तदा-
देशे तातङ्यभावकल्पने मानाभावादत आह स्त इति । क्वचिदिति । लक्ष्या-
नुरोधेन च व्यवस्था । परे तु यासुटो ङित्त्वं न ज्ञापकमपि तु ङित्त्वमिति
भाष्यात् । सार्वधातुकमपिदिति सूत्रे ऽपिदित्यावर्त्य प्रसज्यप्रतिषेधमङ्गेन
ङिच्च पिन्न पिच्च ङिन्नेत्यनेन हलः श्न इति सूत्रे भाष्योक्तेन पित्सु ङित्त्वाप्र-
सक्तेः । शानचः शित्त्वमपि तत्सूत्र एव भाष्ये प्रत्याख्यातम् । हेरपित्त्वस्य
तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकस्य दूषणमप्युक्तं भाष्ये । तस्मादु-
ह्यमाणेत्यादौ सन्ध्यभिधाने ऽजादिपाठाट्टाप् । यत्तु क्ङिति चेति सूत्रभाष्ये
यासुटो ङिद्वचनस्य ङिदादेशानां ङित्त्वमित्यर्थज्ञापकतोक्ता तत्तु वार्ति-
कमते ङिच्च पिन्नेत्यादेस्तेनानुक्तेः यदपि गाङ् लिटीति सूत्रे गाङो ङित्त्वं
सानुबन्धकादेशे ऽनुबन्धाभ्यानित्त्वस्य ज्ञापकत्वमुक्तं वार्तिककृता तदपि
प्रयोजनाभावादित्यादिना भाष्ये दूषितमित्याहुः । निरनुबन्धकस्य स्त्रियां
वृत्तेरसम्भवात्सानुबन्धकस्य ठको ग्रहणमित्याह । सौपर्णेयीति । सुपर्णा-
शब्दादपत्ये स्त्रीभ्यो ढगिति ढक् स्पष्टं चेदं भाष्ये । ऐन्द्रीति । साऽस्य देवते-
त्यण् । कद्रूग्नेत्यादि । प्रमाणे द्वयसज्दघ्नञ्मात्रचः सङ्ख्याया अवयवे
तयप् । मात्रजिति मात्र शब्दादारभ्य यञ्नञकारात् प्रत्याहार इत्युभयीति
सिद्धिः । तत्र अयच् प्रत्ययान्तरम् । अत एवोभयशब्दस्य ङीप् सर्वनामत्व-
विकल्पाविति नवेतीत्यत्र भाष्ये स्पष्टम् । आक्षिकीति । तेन दीव्यतीति ठक्
तदस्य पण्यमित्यधिकारे लवणाट्ठञ् । यादृशीति । त्यदादिषु दृश इति कञ् ।
इत्वरीति । इणनशजसर्त्तिभ्यः क्वरप् । अनुबन्धद्वयोपादानं स्पष्टार्थम् । यद्वा ख्या-
वृत्तेरन्यतरेणापि सिद्धेः । चौरीति । चुरा शीलमस्या इत्यर्थः । नङ्व । तरुण
तलुनयोर्वयस्यप्रथमेऽपीति ङीपि सिद्धे ऽपि गौरादिपाठादन्त्यात्पूर्वेण ङीषा
बाधाभावाय पुनरत्र ग्रहणं तयोश्च स्वरे विशेषः । गतौ हि चारबलौ वेत्यन्-
न्तत्वादाद्युदात्तौ । स्त्रीपुंसाभ्यां नञ्स्नञौ प्रहरणमित्यधिकारे शाक्तियष्ट्या-
रीकक् । आढ्यसुभगेति ख्युन् । यञश्च ॥ प्राचां ष्फ इत्यत्र यञ इत्यनुवृत्त्यर्थो
योगविभागः । हलस्तद्धितस्य ॥ हल इति पञ्चमी यस्येति सूत्रादीतीत्यनुवर्तते
सूर्यतिष्येत्यतो य उपधाया इति च । यद्यपि ऽन्तोपस्थाभावयोरिमत्त्वाद्य-
ष्यकारपरत्वाभावादुक्तमार्थस्योपधाग्रहणानुवृत्तिः । अनपत्याधिकारस्था-
दिति । अपत्याधिकारस्थभिन्नादित्यर्थः । यञ्शब्देन व्याख्यानादपत्याधि-
कारस्थस्यैव ग्रहणमिति भावः । प्राचां ष्फ ॥ यञ इति वर्त्तते । अत इति च
यञो यो ऽकार इति चार्थः । तेन वतण्डीत्यत्रादीवां मते सावकाशं शार्ङ्ग-

वादिङीनं बाधित्वा आवट्यायनीत्यादाविव सर्वत्रग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो नात्र हि वतण्डाच्चेति यञो लुक् स्त्रियामिति लुकि वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम्। षः प्र॥ आदिर्ञिटुडव इति सूत्रादादिरित्यनुवर्तते। प्रत्ययस्येति किम्। षोडश। षष उत्वमित्यत्र षषशब्दस्य निपातनादुपदेशस्थोऽयं षकारः। वस्तुत उपदेश इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपित आदिरिति तत्तत्रावश्यकमुपरञ्जकतयात्रापि सम्बन्धितम्। आयने॥ आयने नस्य नेत्वं फिनो नित्करणात्। तत्साहचर्यादिनोऽपि नस्य नेत्वम्। आदिग्रहणं किम्। ऊरुदघ्नम्। प्रत्ययेति किम्। फक्कति खनति। खचघसादौ धिण्णयतेः खित्यनव्ययस्येत्यादिनिङ्गादित्सञ्ज्ञकानादेशाः। उणादीनां बहुलवचनाबादेशाः घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्ध्यादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव। तेनान्तोदात्तत्वाय चित्त्वं सफलमन्यथाऽनुदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। ननु स्त्रियामेव ष्फविधानात् उक्तार्थानामप्रयोग इति ङीप् न स्यादत आह षित्वसामर्थ्यादिति। ष्फेणोक्तेऽपीति। ष्फान्तेऽपीत्यर्थः। द्विर्बद्धं सुबद्धं भवतीति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात् षित्वमपि तदाश्रयणे ज्ञापकम्। सर्वत्र॥ सर्वेषां मते इत्यर्थस्तदाह। नित्यमिति। प्राचामित्यस्य निवृत्त्या नित्यत्वे सिद्धेऽपि प्राचां ष्फ इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषयेऽपि प्रवृत्त्यर्थं तत्। तेनावट्यायनीत्यत्रावट्याश्चेति चापं बाधित्वा प्राचां मते ष्फ एव। अवटो गर्गादिः। चाप्तु उदीचां मते प्राप्तङीप्बाधनेन चरितार्थः सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न तु अनन्तरष्फबाधकत्वम्। चापि कृते तु न ष्फप्राप्तिरत इत्यधिकारात्। लोहितादिर्गर्गाद्यन्तर्गणः। यद्यपि तत्र कत शकल कण्वेति पाठात् शकलस्य लोहितादिकण्वादिर्बहिर्भूतत्वात् ष्फाणौ न ततः प्राप्तस्तथापि कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः। कतन्तशब्दे शकन्ध्वादित्वात्पररूपम्। तेन शाकल्यायनी शाकल्यस्य छात्राः शाकला इति सिद्धम्। टाप्ङीपोरिति। कौरव्यशब्दे योपधप्रतिषेधाट्टाप् माण्डूकशब्दे जातित्वान् ङीषिति भावः। टाप्ङीपोरपवाद इति पाठस्तु प्रामादिकः। वयसि॥ प्राणिनां कालकृतावस्थाविशेषो वयः। वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थस्तदाह। प्रथमवयोवाचिन इति। तेनोत्तानशयेत्यादौ न। प्रकरणादिना वयःप्रतीतावपि नायन्तद्वाचकः याऽपि व्याख्यादिवशादुत्तना शेते तस्या अपि प्रतीतेः। द्विवर्षेत्यादिरपि न वयोवाची। शालादावपि प्रयोगात्। कौमार यौवन वृद्धत्व भेदात्त्रीणि वयांसि आयुषश्चतुर्भागैश्चत्वारि वा। त्र्यनीका। समाहारे तद्धितार्थेति द्विगुः। अकारान्ता-

त्तरापदत्वात् स्त्रीत्वम् । अपरिमाण ॥ अत्र परिमाणशब्देन परिमाणन्तु सर्वत इति पारिभाषिकमेव गृह्यते । सुवर्णबिस्तौ हेम्नीति कम्बल्यमूर्णापलशतमिति कोशबलेनोन्मानभूतबिस्तकम्बल्ययोर्ग्रहणान्न उन्मानस्य चेद्बिस्तकम्बल्ययोरेवेति नियमार्थम् । तेन द्विनिष्का सिद्धा । द्विरूपं भृता द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा द्विशता । तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः । काण्डान्तादिति तु क्षेत्र एवेति नियमार्थम् । तेन द्विकाण्डी रज्जुरित्यत्र न । द्वौ बिस्तौ पचतीति । पचेर्द्रव्यभावावनकृता आपादितोऽर्थः । अतोन्मानत्वाट्ठको लुक् । आचितः शाकटो भार इत्युक्तेराचितः परिमाणमित्युक्तं । आचितो दशभाराः स्युरित्युक्तेरुन्मानमेतदिति एतदपि नियमार्थमित्यन्ये । प्रमाणे इति । षोडशहस्तप्रमाणद्वारदैर्घ्यवाचककाण्डशब्दस्यायाममात्रपरिच्छेदकत्वेन प्रमाणत्वमिति भावः । पुरुषात्प्रमाणे ॥ पुरुषस्योर्ध्वाधोदिगवस्थितयावन्मात्रपरिच्छेदकत्वेनोन्मानत्वादुन्मानस्य चेद्बिस्तादेरेवेति नियमान्निषेधाप्राप्तौ नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् । अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुषशब्दस्य पञ्चारत्निः पुरुषः इति शुल्बसूत्रादत्र प्रमाण इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाचित्वमपि । द्विपुरुषीति । द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे तद्धस्य परिमाणमिति प्रत्ययस्याद्युतेति लुकि उदाहरणम् । तत्र हि परिमाणशब्देनारोहपरिणाहपरिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः । ऊधसः ॥ समासान्तोऽयम् । तत्र स्त्रियामित्युपसंख्यानादाह स्त्रियामिति । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतो बहुव्रीहावित्यनुवर्तत इत्वा च्चास्यादेशत्वम् । डापडोर्निषेधयोरिति । समासान्तानामनित्यत्वे बाध्ये एव प्रवृत्त्या पर्वमनङ्प्रस्य प्राप्तिः । अत उपधालोपिनो न इत्यत्राप्यनुवृत्त्या ङीपोऽपि बाधः । एतेन मध्येपवादन्यायाद्विनिषेधयोरेव बाधकमित्यपास्तमिति भावः । ङीषिति । ङीपि तु कुण्डोध्नीशब्दे पूर्वपदप्रकृतिस्वरेण धकारोकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वरेणाप्यन्तोदात्तत्वं च सिध्येत । कुण्डमिवोधो यस्या इति विग्रहः । बहुव्रीहेः किम् । ऊधः प्राप्ता प्राप्तोध्नी प्राप्तापन्नेति समासः । अव्ययग्रहणाननुवृत्तिरिति । अस्वरितत्वादिति भावः । निषेधायेति । अपिनाऽन उपधेति ङीप् । अनग्रहणं ऽनर्थकस्यापि ग्रहणात । द्विहायनी बालेति । द्विहायनी द्विवर्षा गौरिति प्राचीवाद इत्युक्तेः । बालेत्यस्य गौरित्यर्थ इत्यन्ये । नित्यं संज्ञा ॥ ननु संज्ञाशब्दा नियतानुपूर्वीका अनादयश्छन्दांसि च दृष्टस्यैव विधानमिति ङीषभावविशिष्टस्य तत्र प्रयोगासम्भवादन उपधेत्येव सिद्धे इदं व्यर्थमिति चेदुत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव तद्वत्यन्

लक्षणान्तरमर्द्धिमुदाहरति वेदे पञ्चदाम्नीति । क्व चित्तु शतमूर्ध्नीति पाठः । केवल मामक ॥ अस्मच्छब्दादणि तवकममकावेकवचनइति ममकादेशः । भागशब्दात्पुंल्लिङ्गात्स्वार्थे ऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वात् स्त्रीत्वम् । पापशब्दो ऽशंवाच्यचा तद्वति वर्त्तमानः स्त्रियाम् । अपरः पवर्गमध्यो घृतादित्वादन्तोदात्तः । उतापरं यत्तिदेवानित्यादौ उतापरीभ्यो मघवेत्यादौ चान्तोदात्तपाठात् । पूर्वमनयच्चापरामित्यादौ पठ्यमानमाद्युदात्तत्वमपि वृषादित्वात् । अपराः पूर्वामभ्येतीत्यादावजादिपाठाट्टाबपि । आर्येण कृतेतिप्राक् सुबुत्पत्तेः समासे ऽदन्तत्वम् । भेषजशब्दो ऽव्युत्पन्न औषधे रूढः । भिषज इदमित्यणि भैषज शब्दो ऽपि तत्र । सुमङ्गलीरियं वधूरिति तु मत्वर्थीये बोध्यम् । प्रकृतिभागाविति । नुक्सन्नियोगेनेति भावः । मतुबिति । वत्वन्तु मादुपधाया इति सिद्धम् । यज्ञेन संबन्ध इति । स्त्रिया इत्यर्थः । संयोगपदं संबन्धोपलक्षणम् । संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वन्तदाह । तत्कर्तृकेति । विभाषा ॥ सहशब्दो विद्यमानवाची पूर्वशब्दो ऽवयववाची व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं गृह्यतइत्याह पतिशब्दान्तस्येत्यादि । न पत्युरिति । सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भावः । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थाद्यनुपसर्जनपदमबन्ध इत्यन्ये । बहुव्रीहेरित्युपसर्जनोपलक्षणं तेन पतिमतिक्रान्ता ऽतिपत्नीत्यपि । व्यस्ते इति । विभाषा सपूर्वस्येत्यत्र यज्ञसंयोगइति न सबध्यते भाष्ये कथन्तुपजकस्य पत्नीति व्यस्ते एव प्रश्नात् । वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः सपूर्वत्वाभावाच्चेतरप्राप्तेरिति भावः । उपचारादिति । पाणिग्रहणाश्रयादिति भावः । यद्वेति । इदं पौत्रा तत्प्रकृतिककर्तृकेऽपि दृष्टमानाभावात् । पूर्वसूत्रे यज्ञसंयोगइति तु वृषलस्य पतिः स्त्रीति प्रयोगसाधनार्थम् । सपूर्वस्य किमिति । अवयववाची पूर्वशब्दः किमर्थं इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः । निपात्यत इति । तेन चोदात्तसादेशस्यैव प्रवृत्त्या सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम् । किं च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीब्नकारविशिष्टोच्चारणम् । अत एव समानस्वामिकदासीभूम्यादौ सपतिरित्येव । समानत्वं चैकस्यैव तत्तत्पत्नीसंबन्धेन भेदमारोप्य बोध्यम् । मुख्यसादृश्यवत्यतिक्रान्ते तु न तथा प्रयोग इष्यते । त्रिसूत्रीति । व्याख्यानादिति भावः । सन्नियोगशिष्ट इति । तेन तदभावे ङीबपि नेति भावः । नित्यान्तानामित्यत्राकार उच्चारणार्थः । नितन्तानामिति पाठे णत्वाभावः

सौत्रः। श्रीण्येतानीति। अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेवानु-पसर्जनादिति चात्र तदन्तविशेषणम्। अत एव वृत्तिकृता नारायणी-नात्र बहुव्रीहिं कृत्वाऽनेन ङीषित्युक्तं तदनुसारेण चेदम्। परे तु उपमा-नानीति सूत्रस्थभाष्यस्वरसात् टिड्ढाणञित्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्त-त्वाच्चात्रापि तथैवोचितम्। तत्र हि शस्त्रीश्यामेत्यादौ श्यामाशब्दः शस्त्र्या-मेव उपमेयत्वं समासप्राच्यमिति पक्षे शस्त्रीश्यामा देवदत्त इत्यत्र ह्रस्वत्व-ञ्च सिद्ध्यति। यत्तूपसर्जनस्येति ह्रस्वत्वं तदा कुम्भकपालनीहिनोऽत्रानुपस-र्जनत्वेन ईकारो न प्राप्नोतीत्युक्तम्। त्र्यवयवस्य त्रिषु स्थानेषु सत्यत्वं बोध्य इत्याहुः। आर्षमत्र णत्वम्। वर्णात्किम्। प्रकृता। गौरतनन्तर इत्या-द्युदात्तः। अन्तोदात्त इति। श्वेता वाजी जायते इत्यादौ तथा पाठादिति भावः। छन्दसि क्लीमिति नादृशापवादस्तेन उत्सर्गसमानदेशा अपवादा इति न्यायात्तत्स्थानिकत्वं ङीप्सन्नियोगशिष्टत्वञ्चास्य बोध्यम्। त्रिशङ्कुवार्णीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः। अन्यतो॥ संनिधानाद्व्याख्यानाच्च तोपध-स्यैव प्रतियोगित्वेनान्वय इत्याह तोपधभिन्नादिति। वर्णात्किम्। खट्वा। आद्युदात्तः। नर्त्तकीति। शिल्पिनि ष्वुन्। गौरशब्दो ऽर्णवाद्यन्तोदात्त इतीह पाठः। अनडुहीति। आमनडुहः स्त्रियां वेति वचनात्पक्षे आम्। सूर्येति। स चेष्ट इति सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु सौरी बलाकेति न सिद्ध्येत्। सूर्यागस्त्ययोरित्यगस्त्यात ङ्यापि अगस्त्यमात्रे न सूर्यशब्द इति तदसिद्धिः। वचनन्तु सूरी कुन्तीत्यत्र चारितार्थम्। अणो लोपस्याभी-यत्वेन सोऽसिद्धोऽणोनिमित्तकान्लोपस्य व्याश्रयत्वाच्चासिद्ध इति यस्योपधा-त्वमुपधाग्रहणादेव भाधिकारमभिव्याप्याभीयासिद्धत्वमिति बोध्यम्। यव-ह्णान्तूत्तरार्थम्। इयामिति निर्देशात्स्वपत्नीकवचनाग्रहणम्। नक्षत्रामीति। नक्षत्रवाचकाद्धा ऽण तत्रत्यर्थस्तेन तिष्यण पुरुषपदमर्हस्विष्य भवस्तेव इत्या-दि सिद्धम्। मातरि पित्र्वेति। पितामहीमर्थोयमिदम्। दष्ट्रेति। दंष्ट्रा श्रीणमिति करणे ष्ट्रन्। अयमजादिषु पठ्यते। गौरादिषु मातामहीशब्द-पाठो ऽनार्ष इत्यन्ये। जानपदीति। जनपदे भवेत्यर्थः। उत्सादित्वादञ् ङी-ब्याद्युदात्तत्वे प्राप्ते ऽन्तोदात्तार्थं वचनम्। वृत्तिरनुक्तया जीविका। अपत्यय इति। तथाच क्रियाशब्दार्थमिति भावः। अमत्रे। कमण्डलुरूपे। कुण्डी-कमण्डलौ जातावुत्पतिर्वशौ मुने पुमानिति मेदिनीकोशात्स तत्र नित्यस्त्रीलिङ्ग इति भावः। यदि तु पिठर तु नानाकुण्डमिति विश्वकोशे तस्य नपुंसक-त्वमप्युक्तं पिठरामत्रशब्दौ च पर्यायौ पिठरः स्यात्कुम्भी कुण्डमित्यमरो न पुंस-कत्वमात्रोक्तिस्त्वयुत्यानुवाद इत्युच्यते तदानेकार्थमस्थानेषु अमत्रेषु कुण्ड-

व्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बोध्यम् । स्त्रीविषयत्वादित्युपलक्षणमिति बहवः । कमण्डलुमस्यानस्यानुगतत्वात्तद्रूपानवच्छिन्नो जातित्वमप्यस्ति सूत्रन्तु नियमार्थमेव अमृते जारजायां कुण्डेत्येवेत्यपरे । आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः । आवपनमिति सामान्ये नपुंसकम् । गुणयोगादिति । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः । विधित्वानुरोधाद् गौणस्याप्य प्रवृत्तिः । वर्णाश्चेदिति । तद्विशिष्टश्चेदित्यर्थः । अन्यथा गुणे शुक्लादयः पुंसीत्युक्त्या ऽसङ्गतं स्यादिति बोध्यम् । सूत्रे वर्णशब्दो ऽर्शआद्यजन्तः । कालान्येति । कार्ष्ण्यगुणयुक्तेत्यर्थः । नील्या अनीति । वृत्त्यनुसारेणेदम् । प्रतिपदोक्तत्वादन्यप्रकृतिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं न त्वस्य लाक्षणिकत्वात् । अनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरितार्थं नील्यारक्ता गौरित्यर्थे नीलेत्यवोचितमिति परे । मैथुनेच्छाशब्दो ऽर्शआद्यजन्तस्तद्वतीत्यर्थः । अन्येति । मैथुनादन्यद्वाञ्छतीति कमितव्यपरेत्युक्तम् । शोणशब्दो वर्णवाची वर्णानान्तणेत्याद्युदात्तः । अन्यत इति सिद्धे विकल्पार्थमिदम् । वोतो ॥ अत्र गुणवचनशब्देन समस्तकृदन्ततद्धितान्तसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दो गृह्यते । आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्संज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य गुणवचनसंज्ञामुक्त्वा तद्बाधकत्वेनैताः क्रमेण पठिताः । गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानामा संज्ञेति न रूपादीनां ग्रहणम् । जातिपदेनाकृतिग्रहणाद्व्यक्तेरिति जातिवाचकानामेव तत्र ग्रहणात् । कठादिशाखाध्येतृणाञ्च तद्धितान्तत्वादेव व्यावृत्तिः । एतत्सूत्रभाष्योक्तं 'सत्त्वे निविशते ऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियजश्च सोऽसत्त्वप्रकृतिर्गुण इति गुणलक्षणं त्वेकदेश्युक्तिः, बहुविशेषणानां वैयर्थ्यात् । भाष्यकृता ऽव्याख्यानाच्च । तस्मादाकडारसूत्रोक्तमेव भाष्यसम्मतमिति भाष्यप्रदीपोद्योते निरूपितम् । शुचिरिति । शुचेरौणादिकः क्रिन् । उत इत्यस्याभावे ऽपि खरुसंयोगोपधावत्यनत्सामर्थ्यात् इत्यस्यात्रासम्बन्धः । उणादीनामव्युत्पन्नत्वात्कोटादिकारादित्यस्यात्राप्रवृत्तिरित्यभिमानः । शुक्लेति तु प्रत्युदाहरणमुचितम् । तपरः किम् । वधूः कामूः । वधूः स्नुषा नवोढा स्त्री कामुकिकन भार्यास्यादिति कोशबलेन नवोढात्वस्य भिकलत्वाकृत्वस्य च प्रवृत्तिनिमित्तत्वेन स्वरूपशब्दवद्गुणवचनत्वात् । पतिवरेति । पतिलाभोत्कण्ठावतीत्यर्थः । बह्वादि ॥ बहुशब्दस्योक्तरीत्या गुणवचनत्वाभावेन ग्रहणम् । कृदिति सर्वत इति च गणसूत्रे । अक्तिनोपीत्यर्थः । व्यवस्थितविभाषाश्रयणात्क्वचिन्न सुगन्धिः । प्रियकृतिवश्ये.

सूत्रान्तर्भावादि व्याप्त्यर्थमिति भावः ॥ क्रीतात् ॥ करणादीति वक्तव्ये पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपान्यपदार्थे ऽवयववाचिपूर्वशब्देन बहुव्रीहिः तेन वस्त्रेण क्रीतेति वाक्ये न। अत इति चानुवर्तते। करणेकिम्। सुक्रीता। धनक्रीतेति। कर्तृकरणे इत्यत्र बहुलग्रहणेन गतिकारकोपपदानामित्यस्यानित्यत्वादत्र सुबुत्पत्त्यनन्तरमेव समास इति भावः। इदमुपपदमतिङिति सूत्रे कैयटे स्पष्टम्। अयमजादिष्वित्यन्ये। एतच्च गतीत्यादेरनित्यत्वे न मानमिति तदाशयः। अत एवैतत्कर्तृकरणे इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम्। अस्यास्येति सूत्रे गत्यादिग्रहणात्तु नियमार्थत्वेन कृदिस्य इत्यादौ णत्वं नेति दिक्। अभ्रलिप्तीति। कृद्ग्रहणे गतिकारकपूर्वस्यापीति विशिष्टस्य क्तान्तत्वम्। अल्पाख्यायामिति समुदायोपाधिः। अल्पत्वं करणगतं क्रियागतं वा। क्तान्तादिति। क्तान्तान्तादित्यर्थः। प्रत्ययग्रहणपरिभाषा लभ्य क्तान्तेन प्रातिपदिकस्य विशेषणात्। ऊरुभिन्नेति। जातिकालसुखादिभ्यः परा निष्ठेति भिन्नशब्दस्य परनिपातः। पाणिगृहीतीति। अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः। भाष्ये तु पाणिगृहीत्यादीनां विशेष इत्युक्तम् ॥ अस्वाङ्ग पूर्व ॥ न स्वाङ्गमस्वाङ्गं पूर्वञ्च तत्पदञ्च पूर्वपदं पुनः कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः। उत्तरसूत्रे भाष्ये कल्याणपाणिपादेत्यादौ तत्प्रवृत्तिवारणाय तत्रैतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथैवौचित्यात्। तत्र यदुपसर्जनं पाणिपादमिति समुदायो न स स्वाङ्गं, स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते यत्र स्वाङ्गं पादेति न तदस्वाङ्गरूपपूर्वपदात्परमित्युक्तम्। एतच्च करसुखेत्याद्यसाध्येव। जातिपूर्वादितीहापि सम्बध्यते ऽन्यथा बहुनञादीनामस्वाङ्गत्वेन विकल्पस्य तत्पूर्वके दुर्वारत्वात् तदाह नित्ये प्राप्ते इति। वस्त्रच्छन्नेति। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघातेनानुदात्तान्तत्वम्। पुत्रादिनीत्यादौ सुप्यजाताविति निदर्शनेनाकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावे ऽतिपुत्रहतेत्यादौ गौरादिङीषिति बोध्यम्। अस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम्। किञ्च। तदभावे ऽस्वाङ्गादिति प्राधान्याद्बहुव्रीहिविशेषणं स्यादिति ॥ स्वाङ्गाच्चो ॥ तदन्तादित्युपसर्जनग्रहणलभ्ये बहुव्रीहिरित्यनुवर्तमाने उपसर्जनग्रहणफलमाह, अतिकेशीति। एकविभक्तीति केशानामुपसर्जनत्वमप्रधानत्वञ्च। शिखेति। इदमेव प्रत्युदाहरणं शोभनेत्यादि सुशिखान्तं प्रतिपन्नम्। विशिष्टे ऽदन्तत्वाभावेनाप्राप्तेः यद्यपि भाष्ये ऽशिखेति प्रत्युदाहृतं तस्याप्येकदेश एव तात्पर्यम्। नञ्पूर्वे सहनञिति निषेधेन प्राप्त्यभावात्। एतेन क्रोडादिषु शिखाशब्दपाठ इत्यपा-

ग्राह्यमेतत् जलसमीपदेशविशेषो हि तटम् । नन्वेवं वृषलत्वादीनां जातित्वं
न स्यात् । अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रह-
णात्वाभावात्किं तु साक्षादुपदेशगम्या सेत्यत आह लिङ्गानामिति । इयमपि
जातिरित्यर्थः लिङ्गानामिति कर्मणि षष्ठी सर्वाणि लिङ्गानि न भजति इति
सर्वशब्दस्य लिङ्गापेक्षत्वे ऽपि भाष्यप्रामाण्याद्भजो ण्विः समासश्च । आख्यात-
माख्यानमुपदेशः । कथनात् । उपदेशात् । एकत्रेन्द्र इत्युपदिष्टे अन्यत्र तद्ग्रहे
मानाभावाच्चेन्द्रत्वादि तथा । ब्राह्मणत्वं तु एकत्रोपदिष्टे तत्तत्पित्रादिषु
सुग्रहम् । वृषलत्वं तदपत्यत्वसंदेहादरादौ सुग्रहम् । अत्राकृतिग्रहणेति ।
नित्यानित्यसाधारणमिति युवत्वादिकमपि जातिरेतन्मते । अपर आह-
त्यादिना यावद्द्रव्यभावित्वमित्यनित्यव्यावृत्तं लक्षणान्तरं भाष्ये दर्शितम् ।
एतच्च भिन्नर्षिकर्तृकलक्षणद्वयप्रामाण्येन कुमार्यादिशब्दे जातिकार्यवि-
कल्पः । अत एव युवजानिरित्यत्र पुंवत्त्वं युवतितरित्यत्र तदभावश्च भाष्ये
उदाहृतः । नन्वेताभ्यामप्यौपगवी कठीत्यादेरसङ्ग्रहोऽनुगतसंस्थानव्यङ्ग्य-
त्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह । गोत्रं चेति । शास्त्रीयमत्र गोत्रमत
एव गोत्राद्यूनि प्रत्ययो भवति स्त्रियां लुगिति न्यासे औपगवी माणविके
त्यत्रापत्यानुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति मा भूदेवमणा-
न्तादनुपसर्जनादित्येवं भविष्यतीति प्रोक्त्वा पूर्वपक्षिणोक्ते तदङ्गीकृत्यैव इह
तर्ह्यौपगवीभार्यः जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति मा भूदेव वृद्धि-
निमित्तस्येत्येवं भविष्यति एवन्तर्हि लुञ्चुकायनीभार्ये दोष इत्युक्तो गोत्रं च-
इति सूत्रस्थभाष्ये युवापत्यत्वस्य जातित्वाभावकथनं सङ्गच्छते अन्यथा
जातिलक्षणङीष एव परत्वाद्भूते युक्तत्वे पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्य-
सङ्गतिश्च । लुञ्चुकायनीभार्ये दोषस्तु ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो
बोध्यः । सर्वतोऽक्तिन्नर्थादिति ङीषि तु पुंवत्त्वप्रतिषेधासिद्धिरेव दोषः । अत
एव ब्राह्मोऽजातावितिसूत्रे ऽपत्ये जातौ नेत्यर्थः सङ्गच्छते तत्रत्वपत्यस्य
जातित्वाव्यभिचारात्तदसङ्गतिः, ब्राह्मो नारद इत्यसिद्धेरतः सामर्थ्येनात्र
शास्त्रीयगोत्रस्यैव ग्रहणमौचित्यम् । अनन्तरापत्यप्रत्ययान्ते ऽवन्ती-
त्यत्र जातिप्रयुक्तो ङीषित्यनुपसर्जनादिति सूत्रभाष्यं त्वनन्तरेऽश्वत्थाम्नि
द्रोणाद्यनिश्चद्गोत्रत्वारोपबुद्ध्यभिप्रायेण । यूनि तु न शास्त्रीयगोत्रत्वा-
रोपस्तत्र युवैव न गोत्रमिति नियमेन तत्संज्ञानिषेधात्तदाह । अपत्यप्रत्ययान्त
इति । अपत्यं पौत्रप्रभृतीति परिभाषित इति शेषः । शाखाद्यर्थेति । षष्ठी
तत्पुरुषः शाखायामस्या विषयत्वाभावात् । जाति कार्यं लभत इति । अनेना-
स्यातिदेशत्वं बोधयति । कठेन प्रोक्तमधीयत इति वैशम्पायनान्तेवासि

त्वात्तेनोक्तार्थे णिनेः कठचरकादिति लुक् । बह्वृचणः प्रोक्ताल्लुक् । बह्वृचा ऋचो ऽध्येतव्या यस्या इति विग्रहे ऋक्पूरित्यप्समासान्तः स्त्रियां बह्वृचनाभावे ऽपि तद्विषयत्वात्कात्त्वम्, यथा ऽनधीयाने माणवके । ब्राह्मणीत्यत्रापत्ये ऽणि ब्राह्मोजातावित्यनेन टिलोपाभावः । परे तु आकृतिग्रहणेत्येव लक्षणमाकृतिपदमुपदेशोपलक्षणमाकृतिद्वारा सकृदुपदेशनग्राह्या जातिरित्यर्थः । तत्रद्वृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादि जातिः । एष ब्राह्मण इति सकृदुपदेशग्राह्या ब्राह्मणत्वादिजातिः । यद्वा आकृतिग्रहणा जातिवाचकोपदेशव्याप्युपलक्षणं लिङ्गानां च न सर्वभागिति तत्स्वरूपानुवादकम्, तेन शुक्लादिगुणानामेकत्वे ऽपि जातित्वाभावो बोधितः । अत एव विशेषणानां चाजातेरिति सूत्रे जातेराविष्टलिङ्गत्वं भाष्य उक्तम् । आविष्टलिङ्गत्वं नियतलिङ्गत्वमिति कैयटः । तच्च प्रायिकमिति केचित् । भाष्ये प्रामाण्याज्ज्ञानिकं शब्दं वाच्यायां न त्रिलिङ्गता, तटादिष्वव्याप्त्यादिकाशङ्का प्रमाद इत्यन्ये, सकृदाख्यातनिर्ग्राह्यपदेन तत्कथमनेकानुगतत्वस्य बोधनम् । सकृदेकत्र क्वचिद्गृहीता सा तदाकृतिद्वारा बोधयिष्टा व्यक्त्यन्तरे यदन्तु शक्यति तदर्थः गोत्वस्येत्या दिशाप्रवृत्त्य । अत एव 'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गा बह्वर्थान्ता जाति कथ्यते बुधैरिति लक्षणान्तरं भाष्य उक्तम् । सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां या ता पा प्राति सा जातिरिति लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वादेराकर्मयोरतिप्रसङ्ग इत्यर्थः । गुणैर्युगपद्ग्रहणं सत्त्वेन यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातेरपीत्यस्यापीत्यर्थ इति कैयटः । इदं स्वरूपकथनमेव । अत्र लक्षणे ऽसर्वलिङ्गामित्यतन्त्रमुक्तार्थकमेव न तु लक्षणान्तरमनुपयोगात् । बह्वर्था सर्वव्यक्तिव्यापिनीत्यर्थः । एतदेकवाक्यतया पूर्वलक्षणे ऽपि सकृदुक्तव्याप्त्यर्थविना । अत एव कः पुनरनयोर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यं यथापरं तथा कुमारभार्य इति भाष्ये लक्षणमित्येकवचनमेव प्रयुक्तम् । अत एवाकृदादिसूत्रेऽपि आकृतिग्रहणा जातिरित्येवोक्तं भाष्य इत्याहुः । बलाकेति । यद्यपि विसकण्टकापदवाच्यजाति विशेषवाची । स च बकस्त्रियामप्यन्या इत्यन्यत् । अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तस्य लिङ्गान्तररहितत्वमित्याद्यर्थः । एतेन बला क्वापवीति यौगिकस्य सर्वलिङ्गत्वात् द्वालाका बकपङ्क्तिः स्यादिलाका बिसकण्टिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मत इति कोशे पुंल्लिङ्गस्याप्यभिधानाच्च नेदं युक्तमित्यपास्तम् । अत एव पाककर्णेति सूत्रे वारितार्थ, तद्धि स्त्रीविषयार्थमन्यथा तेषामपि यौगिके ऽर्थे लिङ्गान्तरसमर्थन

पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ पाककर्ण ॥ जातिवाचिनः किम् । बहुपुष्पा शाखा । स्त्रीविषयादपीति । अजात्यर्थन्तु न । प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु सदच्काण्डेत्यादिनिषेधात् । योपधादपीति । पुनर्जातिग्रहणादिति भावः । अस्त्रीविषयादिति तु पूर्वसूत्रेण विच्छिन्नम् । तितिरिरिति । 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः' इत्यमरादयं स्त्रियामपीति भावः । इतः किम् । दरत् । द्व्यञ्मगधेत्यणो ऽतश्चेति लुक् ॥ ऊङुतः ॥ उकारो नाङ्धात्वोरिति विशेषणार्थः । अन्यथा यवागवेत्यादावपि निषेधः स्यात् । दीर्घोच्चारणं प्रश्लेषेणाकारद्वयविधानद्वारा ब्रह्मबन्धूरित्यादि बहुव्रीहौ पररूपनिवृत्त्यर्थम् । रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम् । श्वश्रूरिति तु श्वशुरः श्वश्र्वेति निर्देशात्सिद्धम् । कुरूरिति । णकारादेशस्य पूर्वान्तवत्त्वात्स्वादयः । अध्वर्यूरिति । अध्वर्युशाखाध्याय वंशोद्भवेत्यर्थः । रज्ज्वादीति । उत इति तु नेह संबद्ध्यते अलाबूरिति भाष्योदाहरणादिति भावः । कृकवाकुरित्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न ॥ पङ्गोश्च ॥ पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तिः । श्वशुरस्येति । श्वश्र्वेति निर्देशादन्त्याकारस्य लोपः । तन्निर्देश सिद्धमेवैतत् । भाष्ये त्विदं न दृश्यते इत्यार्थेति सूत्रस्य भाष्यस्वरसात्स्वयमनुदात्तो ऽव्युत्पन्नं प्रातिपदिकमिति ॥ ऊरूत्त ॥ उपमीयते ऽनयेत्युपमा उपमानं तद्भाव औपम्यमुपमानत्वम् । एवं च तद्बोधकादुत्तरपदादित्यर्थः । उत्तरपदादित्यनेन पूर्वपदं प्रत्यासत्त्यापमानवाच्येव । अतः करभोपमोरूरित्यत्र न । तदाह, उपमानवाचीति । करभेति । मणिबन्धादाकनिष्ठं करस्य बहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः । उपचारादिति । शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपादित्यर्थः । एवञ्च समासस्योपमानोपमेयभावाबोधकत्वेन न पूर्वसूत्रप्राप्तिस्तदारोपे च स निमित्तमित्यस्यादिति भावः । ननु सहशब्दग्रहणं व्यर्थं सर्वस्यारूमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन सहोरूरिति प्रयोगस्यैवाभावादत आह, सहेते इति । रतिश्रममिति शेषः । सह विद्यमानावूरू यस्या इत्यर्थं इति कैयटः । अतिरमणीयावित्यर्थ इति तदाशयः । कमलेति कमलानीनिवेत । कद्रूरिति नागमातुः संज्ञा । अच्छन्दोर्थमिति । छन्दसि कद्रुकमण्डल्वो श्छन्दसीत्यनेनैव सिद्धेरिति भाव । अतो य इति । शार्ङ्गरवादीति लुप्तपञ्चम्यन्तमत्र इति च षष्ठी अनुपसर्जनादिति विभक्तिविपरिणामेनास्य विशेषणमेव टिड्ढेत्यत्रापि सुवचम् । तद्वदत्र पञ्चम्यन्तत्वमपि सुवचम् । अस्योकार इत्यपि पाठः क्वचित् । शार्ङ्गरवा जाति[illegible]

ङीपि प्राप्ते वचनम् । अण्यादिसूत्रोपगणो । पुत्रशब्दोऽत्र पठ्यते तस्य पाठ-सामर्थ्याज्जातित्वाभावेऽपि ङीन् । नृनरयोरिति । यद्यपि नारीति नृशब्देन सिद्धं नरीति तु पुंयोगे ङीषा दुर्वारं जातिग्रहणानुवृत्त्या तत्रा-स्याप्रवृत्तेरिति नरग्रहणं व्यर्थं तथाऽपि नरत्वजातिमात्रप्रतिपिपाद-यिषाया नरीति व्यावृत्त्यर्थं तद्ग्रहणम् । अत्राप्याकारस्यैव वृद्धिर्नित्यानुसारि-व्याख्यानात् । वस्तुत इदं गणसूत्रमनार्षं नरस्य च धर्म्या नारीति कृता-ऽत्र तु सूत्रेण नरस्य चेति वक्तव्यमिति वार्त्तिकेन चाऽनुदात्ततायाः सिद्धेः । स्त्रिया योगतया तद्धर्म्या नरत्वजातिवियोगस्त्वं बुध्यते । अत एव वयस्य-त्यन्तकर्त्तरि णिच्चेति वचनं वास्तुनि भवा वास्तव्य इति इगादित्वात्स्-मास्य प्रत्याख्यानं भाष्ये । नित्यानां शब्दानां यथा कथं चिदन्वाख्यानं कार्य-मिति कैयटः । स्त्रिया सर्वत्रैव परिहार इति तदाशयः ॥ यङश्चाप् ॥ यकारो-पादाय इत्यत्र सामान्यग्रहणार्थः । चकारस्य स्वानुबन्धकत्वमप्याडन्तत्वा-सामान्यग्रहणाविघातकत्वेन चारितार्थ्येऽपि आम्बष्ठ्या आवट्या यत्र पत्न्या-श्चित्स्वरः चित्स्वरं बाधते इति बोध्यम् । चाव्रत इति । सर्वत्र गौकक्ष्य-शब्दस्य गर्गादि यञन्तस्याऽदौचा सर्वत्रैव चाप् सिद्धः स क्राड्यादिषु न पाठ्यः । सप्तम्यन्तात् तस्य वेदः इति स्यात् भाष्ये ॥ तृतीयम् ॥ अंशुना इति शैशिरवादः । उत्तरार्थं इति । इह क्रमेण तदन्तस्य ज्ञापनार्थमिति केचित् ॥ इति स्त्रीप्रत्ययाः ॥ श्रीरामचन्द्राय नमः ॥

स्वौजसमौडिति विहितस्यादीनामर्थविशेषजिज्ञासायां दर्शयितुमाह, प्रातिपदिकार्थेति ॥ इदमपि सूत्रं क्रियायोगमेव प्रवर्त्तते ऽन्यथा ऽस्मि-क्रियायाः सर्वत्र सत्त्वात् । आख्यातार्थकर्त्रादिना ऽभेदान्वयेन तद्वारक-क्रियायोगो बोध्यः । प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्याः कारकविभ-क्तित्वेन भाष्ये व्यवहारः । ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थ-त्वाल्लिङ्गग्रहणमनर्थकमत आह नियतेति । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । अन्यथानुपपत्तिर्विशेषका लक्षणा पदं यत्र । प्रत्ययोपस्थितिः सर्वत्र शक्त्यैव । शक्यतावच्छेदकारोपेण च लक्षणेति न लक्षणासहका टाप् । तटादिशब्दानामनेकलिङ्गत्वप्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गत्वेन नियतोपस्थितिकमिति न तद्व्या-लिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भाष्ये । लिङ्गमात्रेति । लिङ्गस्याधिक्ये इति क्रमेणार्थः । यद्यपि विशेष्यविशेषण-भावेऽप्याधिक्यं भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्र-निमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम् । अभेदेन संसर्गेणेति ।

इतरसंबन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः । अभेदस्तु न संसर्ग इत्यन्यत्र प्रपञ्चितम् । इहोक्तार्थत्वादिति । उक्तार्थानामप्रयोगात् । प्राति-पदिकप्रतिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च तदप्राप्तिः । अनन्वि-तार्थकविभक्त्यपेक्षयानुवादकविभक्तेरेव न्याय्यत्वाच्च द्व्यादिभ्यः सर्वविभक्त्या-पत्तिरिति भावः । लिङ्गविशिष्टपरिभाषयेन्द्राणीत्यादौ प्रथमासिद्धिः । परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोध्यम् । परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च । स च मुख्य इवारोपिततदाश्रयोऽपि । अत एव गोणीत्यादौ स्वादिप्रकृते-र्लाक्षणिकत्वेऽपि न दोषः । अत एव लिङ्गग्रहणं सार्थकमन्यथा स्वमोर्न-पुंसकादित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्य स्पष्टमेव । अत एव स्त्रियामिति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थ इति भाष्य सिद्धान्तितम् । तस्मात्सुप इत्यत्र पुंसीत्यस्य पुंस्शब्दस्य प्रकृतित्व इत्य-र्थः । अभिहिते प्रथमेति वार्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्ता-वन्यनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः । एतेन तन्मते कारकस्य प्रत्ययार्थत्वन्तत्र तु तन्नेति विरोध इत्यपास्तम् । तटादि-शब्दानामपि लिङ्गं वाच्यमेव द्योतकास्तु विसर्गादयः । एवं तत्तल्लिङ्ग बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् । नियमांशनिवे-शे तु न मानं, इदमेवाभिप्रेत्य वृत्तौ प्रातिपदिकार्थः सत्तेत्युक्तम् । सत्तेति प्रवृत्तिनिमित्तोपलक्षणम् आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः । एवञ्च प्राति-पदिकार्थे इत्यस्यालिङ्गालिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहर-णम् । लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम् । अन्ये सर्व-लिङ्गाधिक्य इत्यस्य । द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परि-माणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थ. । एवञ्च तस्य लिङ्गवत्प्राति-पदिकार्थत्वाभावात्परिमाणग्रहणम् । द्रोणः परिमाणमित्यत्र तु द्वौ ब्राह्मणा-विति वत्सयोगे द्रोणशब्दस्यानेकार्थत्वाद्वा । मूलोक्तं तु न युक्तम् । द्रोणो व्रीहिमानयेत्यस्यापत्तेः । किञ्च तिङ्समानाधिकरणे प्रथमेति वार्तिकैक-वाक्यतया भेदान्वये द्रोणो व्रीहिरित्यनिष्टम् । न च यदा परिमेये द्रोणा-दीनां वृत्तिस्तदा तस्यानेकत्वेन परिमाणमात्रपरत्वे तद्बोधेन च व्यभिचा-रान्नियतस्य नियतोपस्थितिकत्वाभावेन प्रातिपदिकार्थत्वासिद्धौ कर्मत्व-त्वस्या प्रमेयार्थक परिमाणग्रहणमिति कैयटोक्तं युक्तमिति वाच्यम् । सिद्धा-माणवक इत्यस्यासिद्धापत्तेस्तद्दृष्टस्यापि सिद्धेश्च । नियमांशनिवेशे माना-भावाच्च । एको द्वावित्यादिसिद्धये तु वचनग्रहणम् । अन्यथैतत्सूत्रोपस्थि-

तानभिहित इत्यस्यात्र फलाभावादेकवाक्यतापन्नसंख्याबोध्यान्वयित्वेन तदप्राप्तिः । रामावित्यादौ संख्याधिक्ये प्रथमा तु द्व्येकयोरित्यादेकवाक्यतयेति बोध्यम् । मात्रग्रहणात्तु यथा कर्मणि द्वितीयेति नियमेन कर्मत्वज्ञानसमानकालिककार्यान्तरस्यैव व्यावृत्तिर्न तु तज्ज्ञानासमानकालिककार्यान्तरस्यात एव गान्धारिविषय इत्यादावपादानत्वादिबोधेऽपि द्वितीया । एवञ्च कर्मणि सत्येव द्वितीया । न तु तदसत्त्वे इति नियमाकारस्तथानेनापि प्रातिपदिकार्थमात्रे एव प्रथमा न तु तदसत्त्वे इत्येव नियमः स्यात् । एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात् एवञ्च तत्समभिव्याहारे सर्वथा प्रथमस्यादिशास्त्रप्रवृत्तिर्न स्यात् तत्सत्त्वे कर्मादिद्योतकप्रातिपदिकात्तत्राहितस्यापि इत्यपि दोषः । इदमेव मात्रग्रहणं कर्मणि द्वितीयेत्यादिमदुक्तनियमत्वे मानम् । मात्रग्रहणाच्च सप्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते । तदकरणे लाघवेन तु कर्मणि द्वितीयैवेत्येव नियम उक्तो भाष्यादौ । स्पष्टञ्चेदं सर्वं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितमित्याह ॥

सम्बोधने च ॥ तत्र वर्तमानादित्यर्थः । सम्बोधनमभिमुखीकरणं तत्फलप्रवृत्तिनिवृत्ती सम्बोध्यतावच्छेदकरूपेण सम्बोद्धुरस्य मितिं विना तस्याभिमुखता द्योतकश्च सैषा विभक्तिः । अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया । अत एव राजा भव पुत्रस्य राजन्पुत्रस्यान्यतयाऽत्रस्यायं प्रयोगः । राम पाहीत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषया रक्षणमिति बोधः । ब्रूहीति देवदत्तेत्यादावपि ज्ञानीहि इत्यादिः शेषो बोध्यः । तत्र वचनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम् । एकतिङ् वाक्यमित्यस्य न श्रूयमाणतिङित्यर्थ इति न दोषः । उद्देश्यविधेयभावेन वाक्यार्थः अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः । ब्रूहीति प्राप्तकाले लोट् । अत एव गच्छेत्याद्यध्याहारे विक्र मृग स्यादौ प्रथमा अनध्याहारे तु द्वितीयेति दिक् ॥ इति प्रथमा ॥

कारके ॥ कारकत्वं क्रियाजनकत्वम् । भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिप्रदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं पुत्रेणान्वयसिद्ध्या तस्याभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाकाङ्क्षया च सर्वत्रान्वयस्यौचित्यात् । सर्वेषां कारकाणां स्वस्वव्यापारक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोध्यम् । समभिहित सम्प्रदानस्यापि दातृबुद्धिस्थत्वादुद्देश्यकत्वेन स्वज्ञानपूर्वकालत्वेनैव जनकत्वम् । एवं स्तोकं पचतीत्यादौ फलस्यापि घटं करोति स्मरति इत्यादौ बाह्यघटादेः पूर्वकालत्वेन स्मृत्यादि-

र्निष्पादकत्वं बोध्यम् ॥ कर्तुरीप्सित ॥ ईप्सितशब्दोऽत्र क्रियापरो नाभिप्रेतपरो रूढः । स्पष्टञ्चेदं वारणार्थानामित्यत्र भाष्यकैयटयोः । कर्तुरिति क्तस्य च वर्त्तमान इति कर्त्तरि षष्ठी । आप्नोतेः सन्नन्तान्मतिबुद्धीति वर्त्तमाने कर्मणि क्तः । मतिरिच्छेति तत्राकरः । एवञ्च कर्त्राप्तुमिष्यमाणं कर्मेत्यर्थः । आप्नोतेरत्र सम्बन्धः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव । उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः यथा तण्डुलं पचतीत्यादौ । फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम् । अत एव तत्समानाधिकरणे स्तोकम्पचतीत्यादौ कर्मत्वसिद्धिः । क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितं तेन कटं कृतवान्करिष्यतीत्यादिसिद्धिः । कारके कर्मसंज्ञं स्यादिति। कारक इति प्रथमार्थे सौत्री सप्तमी । तेन कारकं सत्कर्मसंज्ञमित्यर्थः। सञ्ज्ञिनः क्रियाजनकत्वन्तु महासञ्ज्ञयाक्षिप्तम्। यद्वा सप्तमी यथाश्रुतैव कारकपदञ्च क्रियापरं करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । जनकमित्यध्याहारः । विषयत्वं सप्तम्यर्थः । कारकग्रहणं च स्वरितत्वप्रतिज्ञया एतदधिकारोक्तकर्त्रादिपदग्रहमेव तेन नटश्रवणमित्यादौ न कृदुत्तरपदप्रकृतिस्वरः । ग्रामे वास इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तरः। कर्तुः किमिति । तदभावेऽपि केनाप्तुमित्याकाङ्क्षायां कारकाधिकाराद्व्यापारलाभ इति प्रश्नः । माषेष्विति । माषेषु प्रसक्तमश्वं माषनाशो माभूदित्यन्यत्र बध्नातीत्यर्थः । तदाह । कर्मण इति । तमब्ग्रहणं किमिति । अवयवद्वारा समुदायस्य प्रश्नः । कर्तुरुद्देश्यं कर्मेत्येवास्त्विति भावः । पयसौदनमिति । यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्त्तते तदेदं प्रत्युदाहरणं तत्क्रियायाः पयउद्देश्यकत्वात् । ईप्सिततमशब्दस्य तु क्रियाशब्दत्वात्पयसस्तदा फलाश्रयत्वेनाविवक्षणाच्च दोष इति भावः । तमस्य फलं त्वाग्नेर्माणवकं वारयतीति । तदभावे हि वारणार्थानामिति सूत्रस्यापवादः स्यात् । एवञ्च माणवकस्य कर्मत्वञ्च स्यात् । न चाग्नौ तच्चरितार्थम् । तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात्, वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारार्थः । एष एव प्रवृत्तिविघातः । ईप्सितशब्दे उभयत्रापि क्रियाशब्द एव । न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाप्राप्तिरिति वाच्यम् । कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात् । तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमे अनेन बाधः । ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तच्च नाग्न्यादौ । फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु

प्रत्यासत्तिलभ्यत्वेन यदा पुरुषं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनन्तदा माषेष्वश्वं बध्नातीत्यादौ माषाणां न कर्मत्वम् । बन्धनप्रयोज्यभक्षणफलाश्रयत्वे ऽपि भक्षणस्य बध्नात्यर्थत्वाभावात् । प्रयोज्यत्वनिवेशाद्गां दोग्धीत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये । कर्मेत्यनुवृत्तावपीति । अधिशीङ्स्थासां कर्मेति सूत्रात् । आधारेति । कर्तृकर्मद्वारा क्रियाश्रयो हि सः । तदाह, गेहमित्यादि । अनुक्ते कर्मणीति । कर्मपदेनैतच्छास्त्रबोधितकर्मसंज्ञक कर्मत्वशक्तिमद्गृह्यते । सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमानर्थः । क्रिया कारकभावः सम्बन्धश्च तदर्थः । राज्ञः पुरुष इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका कष्टं श्रित इति क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिकेति समर्थसूत्रस्य भाष्यात् । एवञ्च हरिं भजतीत्यादौ हरिकर्मकं भजनमिति बोधः । अभिहिते त्विति । अनभिहिताधिकारादिति भावः । पञ्चकं प्रातिपदिकार्थ इति पक्षे कर्मणि द्वितीयेत्यादेर्द्व्येकयोरित्यादेश्च नियमत्वमेतदभावे ऽपि स्वादिसूत्रेणानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति कर्मादौ सख्यायाश्च स्वादीनां सिद्धेः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन्कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यन्तदा नार्थानेन । सूत्रजबोधविषयप्रधानविषयेणोक्तार्थानामिति न्यायेन सिद्धेः । यद्यपि द्विर्बद्धं सुबद्धमिति न्यायेन द्वौ ब्राह्मणौ व्यतिलुनीतइत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लत्वानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात् । एवञ्च कर्मादीनां द्योत्यत्वमेव । यदा तु कर्मगतएकत्वइत्यन्वयेन संख्यायास्त्वं तदा सूत्रमारब्धव्यम् । भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं नियमत्वानुपपत्तेरिति स्पष्टं बहुष्वपीति सूत्रे भाष्यादिषु । द्योतकविषयेऽप्युक्तार्थानामिति न्यायो ऽस्त्यपरीति सूत्रे भाष्ये दृश्यते । तत्र हि अध्यागच्छतीत्यादावागच्छतीत्यनेनानधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्य पूपौ द्वावित्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः प्रकृतिप्रत्यययोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः । अत एव द्विदशा इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम् । तत्र हि समासः सुच्चेत्युभयमपि द्योतकं सुजर्थस्य जन्मेति तत्रैव वक्ष्यते । तथा तद्धितद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं माषशः इत्यादाविति सर्वस्य द्वे इति सूत्रे भाष्ये उक्तम् । एवं च धातोरपि क्रियात्वक्रियाकालकारकसंख्यारूपः पञ्चकमर्थः । अत एव तद्गुणे

ऽपि हृक्रोरित्यादेर्भावकर्मणोरित्यादेश्च नियमत्वं भाष्ये संमतं सङ्गच्छते । अत एव दधि अजुघां अवैदित्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । अत एव भावकर्मणोरित्यस्य तद्वृत्ताद्धातोरित्यर्थः सुकर्मणोरिति सूत्रे भाष्ये दर्शितः । द्योत्यत्वाद्वोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः । प्रथमैवेति । सा हि प्रातिपदिकार्थस्य तेनोक्तत्वे ऽपि भवत्येवेति भावः । अत एवाभिहिते प्रथमेति वार्तिकं सङ्गच्छते । तिङ्कृदित्यादिपरिगणनादेव कटं भीष्मं कुर्वित्यादौ विशेष्यादुत्पन्नद्वितीयया गतार्थत्वे ऽपि विशेषणात्सा यदा तु प्रक्रियादशायाङ्कटो ऽपि कर्म भीष्मादयो ऽपि इत्याश्रयणात् कटत्वविशिष्टकटकर्मत्वे ज्ञातेऽपि भीष्मादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततो ऽपि सा । बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव । कारकाणां भावनान्वयव्युत्पत्तेः साक्षात्स्वाश्रयद्वारा वान्वयविषयेति तदा परिगणनं भाष्ये प्रत्याख्यातम् । तिङ्कृतोः स्वप्रकृत्यर्थं प्रति यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति कृतः कटः सुन्दर इत्यादौ न क्वापि द्वितीयेति दिक् । शत्य इति । अत्र वदन्ति । कर्मादिपदद्वारापि न विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानमत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहृतम् । तत्र च सम्बन्धस्य येन रूपेण षष्ठ्याभानं तेनैव तद्धितान्तादिभिस्समुदायशक्त्या, एतदधिकाराभावे च घट इत्यादौ षष्ठीवाच्यत्वेन दृष्टस्यापि प्रातिपदिकार्थपदेन ग्रहणं स्यात्तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्र सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्ता षष्ठी वारयितुम् । वस्तुतस्तु कटं भीष्ममिति परिगणनफलमुक्त्वा तत्प्रत्याख्यानायाशेषत्वाभावात्र शेषलक्षणा षष्ठी । अन्यानभिहितकर्मादीनामभावाच्च नान्या इत्याशङ्क्य न केवला प्रकृतिरिति समयः कृतो न चान्योत्पद्यमाना एतमभिसंबन्धमुत्सहते वक्तुमिति कृत्वा द्वितीयेत्युक्तं भाष्ये तेनैवोपगवादावपि षष्ठी वारितेति तयोरप्यप्रत्युदाहरणत्वमेव । तदुक्तमनेकमित्यत्र भाष्ये ऽपि चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात्षष्ठी प्राप्नोतीत्याशङ्क्याभिहितः सोऽर्थोन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमेत्युक्तम् । अनेनाशेषत्वरूपं षष्ठीप्राप्तिबीजमुक्तम् अन्तर्भूत इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोध्यम् । परे तु शत्य इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रियादेर्भानमत एव न तत्रेतरकारकाणामन्वयः । इदञ्च कर्तृकर्मणोरित्यत्र निरूपयिष्यते एवं प्राप्तानन्द इत्यादौ यत्कर्मकप्राप्तिकर्तानन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्यात्

वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च । किं च तथा सति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः । किंचैवं प्राप्ता भार्या यं स प्राप्तभार्य इत्यादौ पुंवत्त्वानापत्तिः । पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याभावात् । तस्मात्कालाः परिमाणिनेत्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः प्राप्तिकर्त्रानन्दकर्मत्येव बोधः । विशेष्ये तादृशरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं स्वर्गो ध्वस्त इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः । एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानमतो न विभक्तिप्रसक्तिः । अत एव गतिकारकोपपदादिति सूत्रे गतिकारकोपपदादिति किमर्थं परमं कारकं परमकारकमिति प्रतीकमुपादाय यथा संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपीति कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्तीति कैयटेनोक्तम् । अत एव तस्य कर्मत्वस्य न क्रियान्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्यानापत्तिः । एवं कर्मादिपदैरिव षष्ठ्यादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् । तिङ्कृत्तद्धितसमासैरभिधाने इत्यस्यायमर्थः । एतैरभिधाने तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिरेवानभिहितइति तात्पर्यग्राहकम् । ध्वनितश्चेदं सुप आत्मन इति सूत्रे भाष्ये । तत्र हीष्टः पुत्र इष्यते पुत्र इत्यर्थे क्यचमाशङ्क्य स्वशब्देनोक्तत्वान्नेति समाहितं इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वावगतावपि पुत्र इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः । स्व कर्मत्वन्तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तं न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः । सुप आत्मन इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशयः । वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थं इष्टभवन्त इत्यादिना समाधानान्तरमुक्तं वाक्ये फलं विशेष्यं वृत्तौ व्यापार इति समानार्थत्वाभावात्तत्रार्थे वृत्तिर्नेत्याहुः । प्राचीनानुसारेणोक्तस्यप्रायेणेत्यस्य फलमाह क्वचिदिति । परे त्वत्र तु मनः साधुत्वायेष्यतइत्यध्याहार आवश्यकः । अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात् । अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः । विग्रहेऽपि सबद्धं छेत्तुमिष्यतइति यत्तदसाम्प्रतमित्यन्याय्यमित्यर्थः । एवञ्चाध्याहृततिङाभिधानान्न द्वितीया । तादृशेच्छाया अन्याय्यत्वञ्च तद्विषयस्यान्याय्यत्वेन । एवममुं नारद इत्यबोधि

